# उच्चतरमाध्यमिककक्षा - भारतीयदर्शनम् (३४७)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**स्वामी आत्मप्रियानन्दः (समितेः अध्यक्षः)**
कुलपतिः
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. नागराजभट्टः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. वेंकटरमणभट्टः**
सहायकप्राध्यापकः, (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः
कोलकाता - ७००००६ (प.वङ्गम्)

**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्, नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-४, १५, १६, २७)**
**श्रीमान् पलाश-घोडइः**
सहायकप्राध्यापकः (संस्कृतविभागः)
राजा-नरेन्द्र-लाल-खान-महिला-महाविद्यालयः
मण्डलम् - पश्चिममेदिनीपुरम् - ७२११०२ (प.वङ्गम्)

**(पाठः ११-१४, २४-२६)**
**श्रीमान् विवेक-कर्मकारः**
सहायकाध्यापकः (संस्कृतविभागः)
स्कटिश्-चर्च-महाविद्यालयः,
कोलकाता - ७००००६ (प.वङ्गम्)

**(पाठः ५-८,२१-२३)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १७-१८)**
**डॉ. श्रीजित् टी.जि**
साहाय्यकप्राध्यापकः (संस्कृतविभागः)
के.एस.डी.बी. महाविद्यालयः, पत्रालयः - शास्तांकोट्टा
मण्डलम् - कोल्लम् - ६९०५२० (केरलम्)

**(पाठः ९-१०)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १९-२०)**
**डॉ. नागराजभट्टः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**संगणकीयविन्यासः**
**श्रीमान् राहुल-कुलकर्णी**
आचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्णाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं भारतीयदर्शनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

भारतीयदर्शनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्सति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**<br>
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।**<br>
**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**<br>
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।**<br>
**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**<br>
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।**

श्री संजय-कुमार-सिन्हा<br>
निदेशकः (शैक्षिकम्)<br>
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति। भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य उच्चतरमाध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

भारतीयदर्शनस्य प्रपञ्चः अति महान्। बहूनि दर्शनानि च सन्ति। मुख्यानां दर्शनानां संक्षेपेण परिचयः माध्यमिककक्षायाः पाठ्यकमे प्रदत्तः। तेषु कस्यापि एकस्य दर्शनं प्रक्रियापुरःसरम् अध्ययनं क्रमशः कर्तव्यम्। ततः अन्येषु अपि व्युत्पत्तिमान् भवति छात्रः इति विषयं मनसि निधाय अद्वैतवेदान्तदर्शनस्य विशिष्य परिचयः अस्मिन् पाठ्यविषये वर्तते। अद्वैतवेदान्तस्य ज्ञानं सांख्यदर्शनज्ञानेन सुलभं भवति इति धिया सोऽपि विषयः अत्र अन्तर्भावितः अस्ति। एवञ्च प्रमाणानि इति ईषत् क्लिष्टः परन्तु गुरुत्वपूर्णो विषयः अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः भारतीयदर्शनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। सति समये छात्रः तस्य अध्ययनेन ज्ञानपीनः भवितुमर्हति। उच्चतरमाध्यमिककक्षाया भारतीयदर्शनम् इति विषयस्य अध्ययनेन अद्वैतवेदान्ते प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री अद्वैतवेदान्तस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति। अस्य अध्ययनेन अद्वैतवेदान्तस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। प्रमाणानि च स जानीयात्।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकुटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥**

**ॐ शान्ति: शान्ति: शान्ति:॥**

भवत्कल्याणकामी

डॉ. राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

# पुस्तकम्- १

## सांख्यदर्शनम्



## वेदान्ते प्रमाणानि



# पुस्तकम्- २

## अद्वैतवेदान्ते अध्यारोपः



## अद्वैतवेदान्ते अपवादः

# भारतीयदर्शनम्

# उच्चतरमाध्यमिककक्षा

## प्रथमं स्वाध्यायसोपानम्

१

# सांख्यदर्शनस्य सामान्यपरिचयः

## प्रस्तावना

आस्तिकनास्तिकभेदेन भारतीयदर्शनानां द्विधा विभागः विद्यते। तत्र त्रीणि नास्तिकदर्शनानि प्रसिद्धानि। तानि हि चार्वाकदर्शनं, बौद्धदर्शनं, जैनदर्शनं चेति। सांख्य-योग-न्याय-वैशेषिक-पूर्वमीमांसा-वेदान्तदर्शनानि चेति षट् आस्तिकदर्शनानि। अत्र आस्तिकपदेन न ईश्वरस्य स्वीकारः अभिप्रेयते। यानि दर्शनानि वेदस्य प्रामाण्यम् अङ्गीकुर्वन्ति तानि आस्तिकदर्शनानि, यानि च दर्शनानि वेदस्य प्रामाण्यं न स्वीकुर्वन्ति तानि नास्तिकदर्शनानि इति उच्यन्ते। भारतीयदर्शनेषु सांख्यदर्शनं सर्वप्राचीनदर्शनत्वेन मन्यते। षट्सु भारतीयेषु आस्तिकदर्शनेषु सांख्यदर्शनम् अन्यतमम्। यस्मात् भारतीय-परम्परायां सर्वप्राचीनदर्शनं सांख्यदर्शनं तस्मात् एतद्दर्शनज्ञानं विना अन्येषां भारतीयदर्शनानां ज्ञानं पूर्णतः नैव सम्भवति। महाभारतादिग्रन्थेषु सांख्यदर्शनस्य महान् प्रभावः दृश्यते। गीतासु सांख्यदर्शनम् अतीव स्पष्टतया अवलोक्यते। सांख्यदर्शनस्य प्रभावः वेदान्तदर्शने अपि विद्यते। अद्वैतवेदान्तदर्शनस्य प्रधानप्रतिपक्षः सांख्यदर्शनम् इति शङ्करभगवत्पादैः ब्रह्मसूत्रभाष्ये उक्तम्। सांख्यदर्शनस्य बहवः विषयाः वेदान्तदर्शने स्वीकृताः। प्राचीनसाहित्यग्रन्थेषु अपि सांख्यदर्शनस्य प्रभावः सुस्पष्टः। तस्मात् सांख्यदर्शनं भारतीयदर्शनज्ञानाय अतीव उपकारकम्।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- सांख्यदर्शनस्य विस्तरेण परिचयः लप्स्यते।
- सांख्यशब्दस्य अर्थविषये परिचयः लप्स्यते।
- सांख्यदर्शनस्य आचार्याणां ग्रन्थानां च विषये परिचयः लप्स्यते।
- सांख्यस्वीकृतानां तत्त्वानां सामान्यतया ज्ञानं भविष्यति।
- सांख्यमते पुरुषस्य स्वरूपं, पुरुषस्वीकारे हेतुः इत्यादिविषयाः विस्तरेण ज्ञायन्ते।
- पुरुषस्य बन्धः नाम कः, मोक्षः नाम च कः इति विषयः सुस्पष्टः भविष्यति।



## १.१) सांख्यशब्दार्थः

संख्यासंबन्धेन सांख्यम् इति उच्यते। परन्तु संख्याशब्दस्य अर्थे विवादः अस्ति विदुषाम् इति कारणात् संख्याशब्दस्य कः अर्थः इति ज्ञातव्यम्।

**संख्यां प्रकुर्वते यस्मात् प्रकृतिं च प्रचक्षते।**
**तत्त्वानि च चतुर्विंशत् तेन सांख्यं प्रकीर्तितम्।।**

इति महाभारतस्य वाक्यानुसारेण प्रकृतिपुरुषयोः सम्यक् विवेकज्ञानरूपसंख्यायाः प्रतिपादनात्, प्रकृत्यादीनां चतुर्विंशतितत्त्वसंख्यानां च प्रतिपादनात् एतस्य दर्शनस्य सांख्यदर्शनम् इति नाम। केचन वदन्ति "पञ्चविंशतितत्त्वात्मिका संख्या यत्र विविच्यते तदेव सांख्यमिति"। केचन वदन्ति - सङ्ख इति पुरुषस्य संज्ञा, तत्प्रतिपादकतया इदं दर्शनं सांख्यम् इत्युच्यते इति।

अन्ये तु आहुः सम्-उपसर्गपूर्वकाद् दर्शनार्थकात् चक्षिङ्-धातोः ल्युटि चक्षिङः ख्याञादेशे सम्यक् ख्यानम् इति विग्रहात्मकः सांख्यशब्दः। अस्य अयम् अभिप्रायः - जीवः अनाद्यविद्यया आच्छन्नः अस्ति, तदेव तस्य बन्धनम् उच्यते, येन स्वरूपज्ञानं न भवति। तज्ज्ञानम् अन्तरेण दुःखनिवृत्तिः अपि असम्भाविनी। अतः त्रिगुणात्मिकेयं प्रकृतिः पुरुषाद्भिन्ना एव इति आत्मनः उद्भाव्यमानं ज्ञानमेव संख्या। या विवेकख्यातिः इति प्रकृतिपुरुषविवेकः वेति निगद्यते। उच्यते च महाभारते -

**दोषाणां च गुणानां च प्रमाणं प्रविभागतः।**
**कञ्चिदर्थमभिप्रेत्य सा संख्येत्यभिधार्यताम्।।** इति।

अयमेव भावः शङ्करभगवत्पादैः अपि समर्थितः "इमे सत्त्वरजस्तमांसि गुणा मया दृश्याः, अहं च तेभ्योऽन्यः, तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनम्। एषः सांख्यः" इति। "संख्या चर्चा विचारणा" इति, "संख्यावान् पण्डितः कविः" इति च अमरकोशात् संख्याशब्दस्य बुद्धिः पाण्डित्यमित्यर्थः च लभ्यते। अतः पञ्चविंशतिसंख्यकतत्त्वानां प्रतिपादनात्, ज्ञानस्य वा प्रतिपादनात् अस्य दर्शनस्य सांख्यम् इति अभिधानम्।

## १.२) सांख्यदर्शनस्य आचार्याः ग्रन्थाः च -

सांख्यदर्शनस्य प्रणेता महर्षिः कपिलः। परन्तु तत्प्रणीतानि सांख्यसूत्राणि नोपलभ्यन्ते। कपिलप्रणीतानि सूत्राणि इदानीम् उपलभ्यन्ते इति केचिद् आक्षिपन्ति, परन्तु तेषु सूत्रेषु क्वचित् अर्वाचीनानाम् आचार्याणां नामोल्लेखः दृश्यते इति कारणात् अनेके विद्वांसः तानि कपिलप्रणीतत्वेन नाङ्गीकुर्वन्ति। तत्सूत्राणि यद्यपि न कपिलप्रणीतानि तथापि अर्वाचीनेन केनचित् सांख्याचार्येण प्रणीतानि इति अङ्गीकुर्वन्ति। कपिलः आसुरये, आसुरिः च पञ्चशिखाय सांख्यशास्त्रम् उपदिदेश। तस्मात् च शिष्यपरम्परया भगवान् ईश्वरकृष्णः सांख्यशास्त्रं प्राप्तवान्। ईश्वरकृष्णेन सांख्यशास्त्रं कारिकारूपेण उपनिबद्धम्। इदानीं सांख्यदर्शनस्य प्रमाणग्रन्थरूपेण ईश्वरकृष्णप्रणीताः सांख्यकारिकाः एव उपलभ्यन्ते। तत्र सप्ततिः कारिकाः सन्ति। तासु कारिकासु सांख्यदर्शनसिद्धान्तः संक्षेपेण निगद्यते।



तत्कारिकाग्रन्थमाश्रित्य वाचस्पतिमिश्रपादस्य सांख्यतत्त्वकौमुदीति भाष्यं प्रसिद्धम्। सांख्यकारिकासु एव सांख्यदर्शनस्य सर्वाणि तत्त्वानि वैशद्येन उपलभ्यन्ते।

## १.३) सांख्यदर्शनप्रवृत्तेः कारणम्

श्रीमता ईश्वरकृष्णेन सांख्यकारिकाप्रारम्भे एव सांख्यदर्शनस्य प्रयोजनं फलं वा किमिति स्पष्टम् उक्तम्। तथाहि प्रथमा कारिका -

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्।।** इति।

दुःखत्रयेण आध्यात्मिकादिदुःखत्रेकेण सह अभिघातात् असह्यसंबन्धात् प्रतिकूलवेदनीयत्वेन रूपेण सम्बन्धात्, तदपघातके दुःखत्रयोच्छेदके हेतौ विवेके पुरुषाणां जिज्ञासा विविदिषा ज्ञानेच्छा भवति। दृष्टे लोकप्रसिद्धे सुकरे भेषजादौ दुःखोच्छेदके हेतौ सुलभे सति सा दुष्करे दुर्लभे विवेके जिज्ञासा, अपार्था निरर्थिका, व्यर्था इति चेत् न, एकान्तात्यन्ततोऽभावात् दृष्टेन हेतुना एकान्तस्य दुःखनिवृत्तेः अवश्यम्भावस्य अत्यन्तस्य पुनः दुःखानुत्पादस्य च अभावात् असम्भवादिति सान्वयार्थाः।

इह जगति दुःखम् अस्ति एव। दुःखस्य आत्यन्तिकतया विनाशार्थं तथा चिराय सुखलाभार्थं मानवाः मोक्षमार्गेषु धावन्ति। न हि तद्दुःखं नित्यं, न वा अशक्यसमुच्छेदम्। तद् दुःखं हि त्रिविधम् आध्यात्मिकम् आधिभौतिकम् आधिदैविकं च। आध्यात्मिकम् अपि द्विविधं शारीरं मानसं च। देहमधिकृत्य जायमानं दुःखं शारीरं दुःखम्, तद्धि वातपित्तश्लेष्मणां वैषम्यनिमित्तम्। अन्तःकरणम् अधिकृत्य जायमानं दुःखं मानसं, तद्धि काम-क्रोध-लोभ-मोह-भयेर्ष्या-विषाद-विषयविशेषादर्शननिबन्धनं, सर्वं चैतत् आन्तरोपायसाध्यत्वाद् आध्यात्मिकं दुःखम्। बाह्योपायसाध्यं च दुःखं द्वेधा, आधिभौतिकम् आधिदैविकं च। तत्र आधिभौतिकं मानुषपशुसरीसृपस्थावरनिमित्तम्, आधिदैविकं च यक्षराक्षसविनायकग्रहावेशनिबन्धनम्।

तत् दुःखं प्रत्यात्मवेदनीयम्, न शक्यते प्रत्याख्यातुम्। न हि दुःखं केनापि ईष्यते। न हि कोऽपि तादृक् प्राणी दृष्टिपथम् अवतरति यो दुःखात् नोद्विजते, सुखं च नाभिवाञ्छति। दुःखं हि मानसोद्वेगजनकं तस्मादेव दुःखत्रयापघातके हेतौ जिज्ञासा भवति मानवानाम्।

ननु अस्तु दुःखत्रयम्, जिहासितं च तद् भवतु, भवतु च तत् शक्यहानं, तिष्ठतु च शास्त्रगम्यः उपायः तदुच्छेत्तुम्, तथापि अत्र प्रेक्षावतां न युक्ता जिज्ञासा। किमर्थम् इति चेत् दुःखोच्छित्तौ दृष्टाः एव सुकराः उपायाः विद्यन्ते इति कारणात्। अप्यस्ति लौकिकानाम् आभाणकः-

**अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।**
**इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्।।** इति।

सन्ति च शारीरदुःखप्रतीकाराय अनायाससाध्याः शतशः उपायाः भिषग्वरैः उपदिष्टाः। मानसस्य अपि सन्तापस्य प्रतीकाराय मनोज्ञस्त्री-पान-भोजन-विलेपन-वस्त्रालङ्कारादि-विषयप्राप्तिरूपः उपायः सुकरः। एवमादिभौतिकस्य दुःखस्य निरुपद्रवस्थाने वासेन प्रतीकारः सम्भवः। आधिदैविकस्य च दुःखस्य मणिमन्त्रौषधाद्युपयोगेन प्रतीकारः कर्तुं शक्यः। अतः दुःखत्रयविनाशाय विदुषां जिज्ञासा न युक्ता



इति चेत्, न। कुतः। "एकान्तात्यन्ततोऽभावात्" इति। यथाविधि औषधादि-कामिनी-नीति-शास्त्राभ्यास-मन्त्राद्युपयोगेऽपि आध्यात्मिकस्य आधिदैविकस्य आधिभौतिकस्य च दुःखस्य निवृत्तेः अदर्शनाद् अनैकान्तिकत्वं, निवृत्तस्यापि दुःखस्य च पुनः उत्पत्तिदर्शनाद् अनात्यन्तिकत्वम् इति अनायाससाध्योऽपि दृष्ट उपायो न ऐकान्तिकात्यन्तिकदुःखनिवृत्तौ समर्थः इति न जिज्ञासा व्यर्था। अतः सर्वविधानां दुःखानाम् आत्यन्तिकतया विनाशाय युक्ता प्रेक्षावतां जिज्ञासा। एवम् आत्यन्तिकदुःखविनाश एव अस्य शास्त्रस्य प्रयोजनम् इति सिद्ध्यति।



## पाठगतप्रश्नाः १

१. षड् भारतीयानि आस्तिकदर्शनानि कानि।

२. किमर्थम् एतानि आस्तिकदर्शनानि इत्युच्यन्ते।

३. सांख्यदर्शनस्य प्रवर्तकः आचार्यः कः। -

क) गौतमः ख) कणादः ग) कपिलः घ) जैमिनिः

४. सांख्यकारिका केन विरचिता।

क) ईश्वरकृष्णेन ख) वाचस्पतिमिश्रेण ग) आसुरिणा घ) सदानन्दयोगीन्द्रेण।

५. त्रीणि दुःखानि कानि।

६. सांख्यशास्त्रस्य प्रयोजनं किम्।

## १.४) पञ्चविंशतिः तत्त्वानि

सांख्यदर्शने पञ्चविंशतिः तत्त्वानि स्वीक्रियन्ते। तानि हि (१) पुरुषः, (२) प्रधानम्, (३) महत्तत्त्वम्, (४) अहङ्कारः, (५) मनः, (६) चक्षुः, (७) कर्णः, (८) नासिका, (९) जिह्वा, (१०) त्वगिति पञ्च ज्ञानेन्द्रियाणि, (११) वाक्, (१२) पाणिः, (१३) पादः, (१४) पायुः, (१५) उपस्थः इति पञ्च कर्मेन्द्रियाणि, (१६) शब्दः, (१७) स्पर्शः, (१८) रूपं, (१९) रसः, (२०) गन्धः इति पञ्च तन्मात्राणि, (२१) आकाशः, (२२) वायुः, (२३) अग्निः, (२४) जलं, (२५) पृथिवी इति पञ्च महाभूतानि इति। अत्र तत्त्वशब्दस्य अर्थः पदार्थः। तेन सांख्यशास्त्रे पञ्चविंशतिः पदार्थाः इति सिद्ध्यति।

## १.५) तत्त्वानां चतुर्धा विभागः

एतेषां तत्त्वानां पुनः कार्यकारणभेदेन चतुर्धा विभागः क्रियते। ते हि- केवलप्रकृतिः, केवलविकृतयः, प्रकृतिविकृतयः, अनुभयरूपश्चेति। अत्र प्रकृतिपदेन उपादानकारणं, विकृतिपदेन च कार्यं बोध्यव्यम्। तेन केचित् पदार्थाः उपादानकारणरूपाः, केचित् कार्यरूपाः इति सिद्ध्यति। तथाहि उच्यते सांख्यकारिकायां-



**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकश्च विकारो न प्रकृतिः न विकृतिः पुरुषः।।** [सांख्यकारिका-३]

## १.६) केवलप्रकृतिः -

प्रधानं हि केवलप्रकृतिः, सा हि सर्वेषां कारणं, किन्तु तस्याः किमपि कारणान्तरं नास्ति, तस्मात् सा केवलप्रकृतिः कारणमात्रमित्यर्थः। तस्मात् सा मूलप्रकृतिः इत्यपि अभिधीयते। तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः। इयं न अन्यस्य कस्यचिद् विकृतिः तस्मात् इयम् अविकृतिः इत्युच्यते। प्रधानतो महत्तत्त्वस्य उत्पत्तिर्भवति इति महत्तत्त्वस्य उपादानकारणत्वात् प्रधानं केवलं प्रकृतिः। प्रकरोति प्रकर्षेण करोति कार्यम् उत्पादयतीति व्युत्पत्त्या प्रकृतिशब्दो निष्पद्यते। प्रकर्षश्च तत्त्वान्तरारम्भकत्वम्। तथा च यस्मात् तत्त्वान्तरम् उत्पद्यते तादृशः कारणविशेषः प्रकृतिशब्देन उच्यते। सा मूलप्रकृतिर्हि सत्त्वरजस्तमोगुणानां साम्यावस्थारूपा। मूलश्चासौ प्रकृतिश्चेति मूलप्रकृतिः। महदादेः कार्यकलापस्य मूलं हि एतद् प्रधानम्, न तु अस्य कारणान्तरं विद्यते। मूलप्रकृतेरपि कारणान्तरस्वीकारे प्रधानस्य यत्कारणं तस्यापि कारणम् एवं तस्य तस्य कारणान्तरम् अङ्गीकर्तव्यम्। तेन च अनवस्थादोषः समापतति। तथा हि सांख्यसूत्रम् - "**मूले मूलाभावादमूलं मूलम्**" इति।

## १.७) प्रकृतिविकृतयः -

ये च पदार्थाः कस्यचित् तत्त्वस्य कारणम् अर्थात् प्रकृतिः, समञ्च कस्यचित् तत्त्वस्य कार्यम् अर्थात् विकृतिः ते प्रकृतिविकृतयः उच्यन्ते। महदहङ्कारशब्दस्पर्शरूपरसगन्धा इति सप्त पदार्थाः प्रकृतयः विकृतयश्च। तत्र महत्तत्त्वाद् अहङ्कारः उत्पद्यते इति महत्तत्त्वम् अहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः। अहङ्काराच्च शब्दादीनि पञ्चतन्मात्राणि श्रोत्रादीनि एकादशेन्द्रियाणि च उत्पद्यन्ते इति कारणात् पञ्चतन्मात्राणाम् एकादशेन्द्रियाणां च अहङ्कारः प्रकृतिः, विकृतिश्च महतः। एवं पञ्चतन्मात्रेभ्यो यथाक्रमम् आकाशादीनि पञ्चमहाभूतानि जायन्ते इति पञ्चतन्मात्राणि आकाशादिपञ्चमहाभूतानां प्रकृतयः, विकृतयश्च अहङ्कारस्य। एवं महत्तत्त्वाहङ्कारपञ्चतन्मात्राणि इति सप्त पदार्थाः पूर्वपूर्वतत्त्वापेक्षया विकृतिरूपत्वाद् उत्तरोत्तरतत्त्वापेक्षया च प्रकृतिरूपत्वात् प्रकृतित्वविकृतित्वोभयरूपा इति सिद्ध्यति।

## १.८) केवलविकृतयः -

आकाशं वायुः अग्निः जलं पृथिवी चेति पञ्च महाभूतानि, श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणम् चेति पञ्च ज्ञानेन्द्रियाणि, वाक्-पाणि-पाद-पायूपस्थानि इति पञ्च कर्मेन्द्रियाणि, मनश्चेति षोडश पदार्थाः केवलविकृतयः। तत्र आकाशादीनि पञ्चमहाभूतानि पञ्चतन्मात्रेभ्यः जायन्ते इति पञ्चतन्मात्राणां विकृतयः, श्रोत्रादीनि एकादशेन्द्रियाणि च अहङ्काराद् उत्पद्यन्ते इति अहङ्कारस्य विकृतयः। ततश्च पञ्चमहाभूतानाम्



एकादशेन्द्रियाणां चेति षोडशपदार्थानाम् अन्यस्मादुत्पत्तेः, तेभ्यश्च अन्यस्य अनुत्पत्तेः केवलविकृतिरूपत्वमिति सिध्यति।

ननु षोडशपदार्थेषु एकादशेन्द्रियेभ्यः कस्यचिदनुत्पत्तेः तेषां केवलविकृतित्वम् अस्तु, आकाशादिपञ्चमहाभूतेभ्यः तु गोघटवृक्षादीनाम्, गोवृक्षादिभ्यो दुग्धबीजादीनां दुग्धबीजादिभ्यश्च दध्यङ्कुरादीनाम् उत्पत्तिः दृश्यते। तेन पञ्चमहाभूतानाम् केवलविकृतित्वं न सम्भवति, तस्मात् पञ्चमहाभूतानां प्रकृतित्वविकृतित्वोभयरूपतया एव वर्णनं समुचितमिति चेत् उच्यते - यद्यपि पृथिव्यादीनां गोघटवृक्षादयः, गोवृक्षादीनां दुग्धबीजादयः, दुग्धबीजादीनां च दध्यङ्कुरादयः विकाराः सन्ति तथापि ते न पृथिव्यादिभ्यः तत्त्वान्तरम् स्थूलतेन्द्रियग्राह्यत्वयोः समत्वात्। यथा स्थूलतेन्द्रियग्राह्यताधर्मौ पृथिव्यादिषु विद्येते तथैव गोवृक्षादिषु अपि विद्येते विशेषाभावात्। यत्र हि तत्त्वान्तरत्वं तत्र स्थूलतेन्द्रियग्राह्यत्वयोः अपि तारतम्यम् अस्ति एव। अत्र तत्त्वान्तरस्य उपादानत्वमेव वस्तुतः प्रकृतित्वम्, न तु उपादानत्वमात्रम्। तथाहि पृथिवी गोघटवृक्षादीनाम् उपादानकारणम्, परन्तु न तत्त्वान्तरम्, गोवृक्षादयः दुग्धबीजादीनाम् उपादानकारणं किन्तु न तत्त्वान्तरम्। एवं तत्त्वान्तरत्वाभावात् उपादानत्वे अपि पृथिव्यादीनां प्रकृतित्वं न सम्भवति, अपि तु केवलविकृतित्वमेवेति षोडश पदार्थाः केवलविकृतयः।

## १.९) अनुभयरूपः

अविकृतिः हि पुरुषः। स न कस्यापि प्रकृतिः, न च कस्यापि विकृतिः। पुरुषो न कस्माच्चित् उत्पद्यते, नापि पुरुषात् किञ्चित् उत्पद्यते इति पुरुषो न प्रकृतिः नापि विकृतिः, किन्तु अनुभयरूपः। "कार्यं कारणसजातीयं कार्यत्वात्, मृज्जातीयमृदुत्पन्नघटवत्, पुरुषस्तु तयोर्विजातीयत्वात् न कार्यकारणोभयरूपः" इति निष्कर्षः। स कूटस्थः साक्षिस्वरूपः। तस्मात् स अविकृतिः इत्युच्यते। इत्थं पञ्चविंशतितत्त्वानां केवलप्रकृतित्वेन प्रकृतिविकृतित्वेन केवलविकृतित्वेन प्रकृतिविकृतित्वोभयहीनत्वेन च चतुर्धा विभागः संसिद्धो भवति।

ननु प्राणस्य कालस्य च सत्त्वात् पञ्चविंशतिः एव तत्त्वानि इति न युक्तमिति चेत् उच्यते - इन्द्रियाणां साधारणवृत्तिरेवास्ति प्राणः, न तत्त्वान्तरम्। कालोऽपि भूतभविष्यद्वर्तमानरूपः नास्ति कश्चित् पदार्थः, स्वातन्त्रेण कालस्वरूपस्य निरूपयितुम् अशक्यत्वात्। तस्मात् पञ्चविंशतिः एव तत्त्वानि सन्ति, न न्यूनानि, नाप्यधिकानि। तथाहि उच्यते सांख्यप्रवचनभाष्यकारैः – "प्रकृतेः कार्यं महत्तत्त्वम्, महतश्च कार्योऽहङ्कारः, अहङ्कारस्य कार्यद्वयम् – तन्मात्राणि, उभयमिन्द्रियं च। तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेन एकादशविधम्। तन्मात्राणां कार्याणि च पञ्च स्थूलभूतानि, स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वम् अभ्युपगन्तव्यम्। पुरुषस्तु कार्यकारणविलक्षणः, इत्येवं पञ्चविंशतिः पदार्थव्यूहः, तदतिरिक्तः पदार्थो नास्ति, दिक्कालौ चाकाशमेव" इति।

## १.१०) पुरुषस्वरूपम्

पञ्चविंशतितत्त्वेषु मुख्यं तत्त्वद्वयं हि पुरुषः प्रकृतिः च इति। पुरुषः साक्षी केवलः द्रष्टा अकर्ता मध्यस्थः च। पुरुषस्य स्वरूपम् उच्यते सांख्यकारिकायाम् -

**तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।**

**कैवल्यं माध्यस्थं द्रष्टृत्वमकर्तृभावश्च।।** इति। [सांख्यकारिका -१९]

पुरुषः हि साक्षी अर्थात् चेतनः द्रष्टा अकर्ता च। द्रष्टृत्वे सति अकर्तृत्वं साक्षिणः लक्षणम्। द्रष्टा सर्वदा चेतनः एव भवेत् न अचेतनः। तेन पुरुषः चेतनः सर्वद्रष्टा परन्तु न कस्यचित् अपि कर्ता। स हि केवलः। आत्यन्तिकः दुःखत्रयाभावः हि कैवल्यम्। पुरुषे नास्ति कस्यचित् अपि दुःखस्य लेशः। तस्मात् स केवलः इति उच्यते। स हि मध्यस्थः उदासीनः इत्यर्थः। किमर्थं सः मध्यस्थः इति चेत् उच्यते सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रपादैः - "**सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति, तदुभयरहितस्तु मध्यस्थ इति, उदासीन इति चाख्यायते**" इति। उच्यते च श्रीमद्भगवद्गीतायां भगवता वासुदेवेन -

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**

**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।**

**यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्।**

**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।** इति। [श्रीमद्भगवद्गीता-२.४६-४७]

पुरुषः हि सुखदुःखातीतः, सुखे दुःखे वा तस्य लेपः न तिष्ठति, पद्मपत्रवत् निर्लिप्तः तिष्ठति। नास्ति तस्य भयं क्रोधः वा। शुभम् अशुभं च प्राप्य तस्य आनन्दः द्वेषः वा न भवति।

पुरुषः हि चेतनः उत्पत्तिविनाशरहितः च वर्तते। एवं न कस्य अपि कारणं सः अस्ति। किन्तु पुरुषः सर्वथा पद्मपत्रवत् निर्लेपः एव वर्तते। तथाहि - पद्मपत्रं यथा जले वर्तमानम् अपि जलेन लिप्तं न भवति, तथा सर्वगतः अपि पुरुषः कर्तृत्वभोक्तृत्वादिधर्माणाम् आश्रयः न भवति। तथा च इदम् अनुमानम् - "पुरुषः कर्तृत्वाभाववान् कारणाभाववत्त्वात्, यन्नैव तन्नैवं यथा बुद्धिः" इति। अस्य अयमर्थः - तेन पुरुषेण कर्तृत्वधर्मत्वाभाववता भवितव्यम् कारणत्वधर्मत्वाभाववत्त्वात्, यः यः पदार्थः कर्तृत्वधर्मत्वाभाववान् न भवति, स कारणत्वधर्मत्वाभाववान् अपि न भवति, यथा बुद्धिः [महत्तत्त्वम्] कर्तृत्वाभाववती नास्ति, किन्तु कर्तृत्वधर्मवती एव अस्ति इति सा कारणत्वधर्मत्वाभाववती अपि नास्ति, किन्तु कारणत्वधर्मत्ववती एव सा वर्तते इति।

अनेन च अनुमानेन पुरुषः कर्तृत्वाभाववान् इति सिध्यति। यः च कर्ता भवति स एव भोक्ता भवति इति नियमात् भोक्तृत्वम् अपि न पुरुषस्य धर्मः इति आयाति। ततः च 'न पुरुषः कर्ता नापि भोक्ता' इति संसिद्धम्। ननु '**संघातपरार्थत्वात्**' (सांख्यकारिका -१७) इत्यत्र पुरुषस्य भोक्तृत्वम् उक्तम्, तस्मात् पुरुषः नास्ति इति कथनम् अयुक्तम् इति चेत् उच्यते - संघातपरार्थत्वादित्यत्र कारिकायां यत् पुरुषस्य भोक्तृत्वम् उक्तम् तत् वस्तुतः पुरुषे बुद्धिनिष्ठभोक्तृत्वम् आरोप्य एव, सांख्यनये बुद्धेः एव भोक्तृत्वात्,



पुरुषस्य च परमार्थतः अभोक्तृत्वात्। ननु बुद्धेः इव पुरुषस्य अपि कारणत्वस्वीकारे का क्षतिः इति चेत् अत्र उच्यते - यदि पुरुषस्य घटादिकार्याणाम् उपादानकारणत्वम् अभ्युपगम्येत, तदा उपादानकारणेन सह कार्यस्य अभेदात् घटादिकार्याणां नाशे चेतनस्य पुरुषस्य अपि नाशापत्तिः। तच्च श्रुतिस्मृत्यादिविरोधात् अनिष्टम्। "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इति श्रुत्या आत्मनः स्वरूपतः विनाशधर्मराहित्यम् उपदिश्यते। "अज आत्मा" "न जायते म्रियते वा कदाचित्" इत्यादिश्रुतिस्मृतिभिः आत्मनः जननमरणादि-सर्वविकाररहिततत्वम् अभिधीयते। तस्मात् पुरुषस्य अकारणत्वम् एव अभ्युपेयम्। इत्थं पुरुषस्य घटादिकारणत्वे कार्यकारणयोः अभेदात् घटादिरूपेण पुरुषस्य एव नाशः जातः, तथा च पुरुषस्य सर्वथा कूटस्थत्वं व्याहन्येत इत्यतः पुरुषस्य न कारणत्वम् इति सारः।

सः पुरुषः सर्वव्यापी। तस्य गतिः औपाधिकी। देहसम्बन्धात् हि पुरुषे गतिः आरोप्यते। तथाहि सूत्रितम् - "अन्यत्र गतिश्रुतिरप्युपाधियोगादाकाशवत्" इति। पुरुषो हि निर्गुणः, न हि सुखादिकं पुरुषसमवेतं किन्तु पुरुषातिरिक्तपदार्थनिष्ठम्। ननु प्रलये अन्तःकरणाभावात् अदृष्टस्य निराधारप्रसङ्गः इति चेत् न, सांख्यनये प्रलये अदृष्टस्य आत्यन्तिकविनाशः न स्वीक्रियते, अपि तु सूक्ष्मशरीरे अवस्थितिः स्वीक्रियते। सांख्यमते पुरुषः न ज्ञानाधिकरणम्, किन्तु ज्ञानमयः स्वप्रकाशः। सांख्यप्रवचनभाष्ये च भाषितं - "वैशेषिका आहुः प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगज्ञानाख्यः प्रकाशो जायते इति तन्न। लोके जडस्याप्रकाशस्य लोष्ट्रादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात्। अतः सूर्यादिवत्प्रकाशस्वरूप एव पुरुष इत्यर्थः।" इति। तथा च स्मृतिः -

**यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते।**
**तद्वदैक्यं न शंसध्वं प्रपञ्चपरमात्मनोः।।**
**यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्।**
**ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु।।** इति।

पुरुषे सत्त्वादयः त्रयो गुणाः न सन्ति इति स अत्रिगुणः, प्रकृतेः च नितान्तं विलक्षणः इति कारणात् अव्यक्तविलक्षणः। प्रकृतेः तदीयमहत्तत्त्वादिकार्याणां च न कश्चिदंशः तस्मिन् सम्मिलितः, नापि पुरुषस्य कश्चिदंशस्तेषु सम्मिलितः इति व्यक्ताव्यक्तविलक्षणः। आत्मानं केचिदेव योगसम्पन्नाः तत्त्वज्ञाः जानन्ति, न सर्वे इति असर्वसाधारणत्वात् स असाधारणः, अथवा प्रतिशरीरं पुरुषः भिन्नः इति कारणात् असाधारणः। नासौ प्रधानादिवत् जडः किन्तु चेतनताशाली इति चेतनः। मृत्तिका यथा घटशरावादीनि अनेकानि कार्याणि उत्पादयति न तथा पुरुषः किञ्चित् कार्यम् उत्पादयति इति कारणात् अप्रसवधर्मी, सरूपविरूपपरिणामहीनः इत्यर्थः। ततश्च अत्रिगुणः, विवेकी, अविषयः, असाधारणः, चेतनः अप्रसवधर्मी च पुरुषः इति सिध्यति। अत्रिगुणत्वादयः धर्माः पुरुषस्यैव, प्रकृतौ तदीयकार्येषु महत्तत्त्वादिषु चासत्त्वात्। तथा आत्मा प्रतिशरीरं भिन्नत्वात् अनेकः इति।

पुरुषस्य च कश्चित् उत्पादकः नास्तीति जन्यत्वाभावात् नित्यः इति। कस्मिंश्चित् स्थाने आत्मनः नास्ति अभावः, किन्तु सर्वत्रैव असौ तिष्ठतीति व्यापकत्वात् विभुः इति। आत्मनि काचित् क्रिया न भवतीति क्रियाशून्यत्वात् आत्मा निष्क्रियः। आत्मा न कञ्चिद् आश्रित्य तिष्ठति किं तु स्वयमेव विभुत्वात् सर्वत्र तिष्ठतीति अनाश्रितत्वात् अनाश्रितः। धूमः यथा वह्निम् अनुमापयति न तथा आत्मा



प्रधानानुमापक इति अलिङ्गत्वात् (अननुमापकत्वात्) अलिङ्गः। वस्त्रे यथा सूत्ररूपः, घटे च कपालरूपः अवयवविभागः अस्ति न तथा आत्मनि कश्चिद् अवयवविभागः विद्यते इति कारणात् आत्मा निरवयवः। पुरुषस्यांशो यथा तदीयपुत्रपौत्रादिषु अनुवर्तते, दीपकस्य तैलं तदीयवर्तिकायां, प्रकृतेः अंशः महत्तत्त्वे, महत्तत्त्वस्य चाहङ्कारे, न तथा आत्मनि कस्यचिदंशः अनुवर्तते, तस्य कस्माच्चिद् अनुत्पत्तेः इति अस्य सम्पर्कात् आत्मा स्वतन्त्रः। ततश्च आत्मा हि शुद्धस्फटिकवत् स्वच्छः, निर्गुणः, आकाशवत् विभुः, नित्यः, संख्यया अनन्तश्च अस्तीति सिद्ध्यति। तदुक्तम् -

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्।।** [सांख्यकारिका - १०]
**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्।।** इति। [सांख्यकारिका - ११]



## पाठगतप्रश्नाः-२

७. पञ्चविंशतितत्त्वानां चतुर्धा विभागः कः।
८. अनुभयरूपः कः।
९. केवलविकृतयः के।
१०. प्रकृतिविकृतयः के।
११. प्रधानं किमर्थं केवलप्रकृतिः इत्यभिधीयते।
१२. सांख्यनये पुरुषः कः।

## १.११) पुरुषसद्भावे मानम्

सांख्यशास्त्रे पञ्चविंशतितत्त्वेषु अन्यतमः तावत् पुरुषः। परन्तु एतादृशस्य चेतनस्य निर्विकारस्य पुरुषस्य स्वीकारे कः हेतुः, अर्थात् पुरुषस्य अस्तित्वे किं प्रमाणम्। अयं विषयः अपि सांख्यकारिकायाम् आलोचितः। तथाहि कारिका -

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च।।** इति। [सांख्यकारिका -१७]

अत्र कारिकायाम् पुरुषस्य सद्भावे पञ्च हेतवः निगदिताः। पुरुषः अस्ति कस्मात् इति चेत्- (क) संघातपरार्थत्वात्, (ख) त्रिगुणादिविपर्ययात्, (ग) अधिष्ठानात्, (घ) भोक्तृभावात्, (ङ) कैवल्यार्थं प्रवृत्तेः च।



## १.११.१) संघातपरार्थत्वात् -

संघातः नाम समूहः, अत्र संघातपदेन प्रधानात् उत्पन्नानि सर्वाणि एव कार्यजातानि स्वीकरणीयानि। एवं संघातानां सम्भूयकारिणां स्वार्थक्रियायाम् इतरसापेक्षाणाम् इति यावत्, परार्थत्वात् स्वेतरस्य भोगापवर्गफलकत्वात् इत्यर्थः। सर्वाणि हि प्रकृतिजातानि अचेतनानि, न हि तानि स्वस्य कृते प्रवर्तन्ते। दृश्यते हि लोके सर्वाणि अचेतनानि वस्तुजातानि शयनासनादीनि परस्य चेतनस्य कस्यचित् अर्थाय प्रयोजनाय प्रवर्तन्ते। एवम् यस्मात् प्रकृत्यादीनि अचेतनानि तस्मात् ताभिः अपि कस्यचित् चेतनस्य प्रयोजनाय एव प्रवर्तितव्यम्। तस्मात् अस्ति कश्चित् चेतनः यस्य प्रयोजनाय भोगाय अपवर्गाय च प्रकृत्यादीनाम् अचेतनानां प्रवृत्तिः दृश्यते इति अङ्गीकर्तव्यम्। तस्मात् अस्ति कश्चित् चेतनः पुरुषः इति अङ्गीकर्तव्यम्।

## १.११.२) त्रिगुणादिविपर्ययात् -

ननु संघाताः संघातान्तरम् एव बोधयन्ति, न तु असंहतम् आत्मानम्। दृश्यते हि शयनासनादयः सङ्घाताः संहतशरीरार्थाः इति। अत एव अव्यक्तादयः संहताः संहतान्तरम् एव बोधयन्ति, न तु अव्यक्ताद्यतिरिक्तं पुरुषम् इति चेत् न, संघातानां संघातान्तरं प्रति परार्थत्वं स्वीक्रियते चेत् तस्यापि संघातस्य संघातान्तरं प्रति परार्थत्वं स्वीकर्तव्यम्, तस्यापि संघातान्तरम् इति अनवस्थादोषः आपतति। सांख्यशास्त्रे तु अस्ति अनवस्थादोषस्य निराकरणाय व्यवस्था, तस्मात् संघातान्तरकल्पनं गौरवाय भवति। ननु प्रमाणत्वात् कल्पनागौरवम् अपि न दोषाय इति चेत् न, अत्र संहतस्य परार्थत्वमात्रेण अन्वयः कर्तव्यः, न तु संहतस्य संहतान्तरं प्रति परार्थत्वेन। तस्मात् अनवस्थाभिया पुरुषस्य असङ्घातत्वं स्वीकुर्वता अत्रिगुणत्वम् अविवेकित्वम् अविषयत्वम् असामान्यत्वं चेतनत्वम् अप्रसवधर्मित्वं च अभ्युपेयम्। त्रिगुणादयः हि धर्माः संहतत्वेन व्याप्ताः, तत्संहतत्वम् अस्मिन् पुरुषे नास्ति, तस्मात् त्रिगुणादयः धर्माः अपि अस्मिन् पुरुषे न विद्यन्ते। एवं त्रिगुणादीनाम् अभावः यत्र विद्यते स पुरुषः इति पुरुषस्य सद्भावे प्रमाणं दर्शितं सांख्यकारिकाकारेण ईश्वरकृष्णेन - '**त्रिगुणादिविपर्ययाद्**' इति। सत्त्वं रजः तमः इति गुणत्रयम्। प्रधानं हि गुणत्रयात्मकम्। एवं प्रधानात् यानि महदादितत्त्वानि उत्पद्यन्ते तानि सर्वाणि त्रिगुणात्मिकानि इति सिद्ध्यति। अत्र त्रिगुणादिपदेन – "**त्रिगुणमविवेकि विषयः सामान्यम् अचेतनं प्रसवधर्मि**" इत्यादिकारिकोक्तानि धर्माणि ज्ञेयानि। ये ये त्रिगुणादिमन्तः ते ते संहताः इति व्याप्तिः। पुरुषः तु असंहतः, अतः पुरुषे त्रिगुणादिधर्माः न विद्यन्ते। अर्थात् त्रिगुणादीनां विपर्ययः नाम अभावः पुरुषे विद्यते। त्रिगुणादीनाम् अभावः यत्र विद्यते स पुरुषः इति पुरुषस्य सद्भावे द्वितीयः हेतुः।

## १.११.३) अधिष्ठानात् -

पुरुषस्वीकारे तृतीयः हेतुः हि अधिष्ठानत्वम्। यम् अधिकृत्य आश्रित्य किञ्चित् तिष्ठति प्रवर्तते वा सः अधिष्ठाता इति उच्यते। पुरुषः हि अधिष्ठाता। केषाम् अधिष्ठाता इति चेत् त्रिगुणात्मकानां सर्वेषाम् अधिष्ठाता पुरुषः। एवं सुखाद्यात्मकानां महदादीनाम् अपरेण केनचित् प्रेष्यमाणत्वात् अस्ति कश्चित् प्रेष्यमाणः चेतनः पुरुषः इति अभ्युपेयम्। तथाहि अनुमानम्- महदादिकं केनचित् परेण चेतनेन



अधिष्ठीयमानं भवितुम् अर्हति, सुखाद्यात्मकत्वात्, संहतत्वात् वा इति। यत् यत् सुखदुःखमोहात्मकं तत्सर्वं परेण अधिष्ठीयमानं दृश्यते। तथाहि रथादिः सारथ्यादिभिः अधिष्ठितः दृश्यते। एवं प्रकृते महदादीनाम् अचेतनपदार्थानाम् अधिष्ठाता कश्चित् चेतनः पुरुषः अस्ति इति सिद्ध्यति। ननु महदादीनाम् अधिष्ठाता भवन् कश्चित् महदादिषु एव अन्यतमः अधिष्ठाता भवतु, पुरुषाधिष्ठानस्वीकारेण किं प्रयोजनम् इति चेत् न, महदादिषु एव तु कश्चित् अधिष्ठाता न भवितुम् अर्हति, स्वस्य स्वाधिष्ठानायोगाद् इति भावः। ननु यः हि व्यापारवान् स एव भवति अधिष्ठाता, यथा रथस्य सारथ्यादिः, आत्मा तु निर्गुणत्वेन निष्क्रियत्वात् न व्यापारवान्, अतः तस्य अधिष्ठातृत्वं न भवितुम् अर्हति इति चेत् मैवम्, व्यापारवतः एव अधिष्ठातृत्वम् इति नियमः न शक्यते कर्तुम्, अयस्कान्तमणेः इव निर्व्यापारस्य अपि आत्मनः सन्निधिमात्रेण अधिष्ठातृत्वम् उपपद्यते। तथाहि कापिलसूत्रम् - "**तत्सन्निधानादधिष्ठातृत्वं मणिवत्**" इति।

## १.११.४) भोक्तृभावात् -

पुरुषस्वीकारे चतुर्थः हेतुः हि - भोक्तृभावात् इति। सुख-दुःखे हि भोग्ये। अनुकूलवेदनीयं सुखं प्रतिकूलवेदनीयं दुःखम्। सुखं दुःखं च प्रत्यात्मम् अनुभूयते। सुख-दुःखयोः भोग्यत्वम् तदा एव सम्भवति यदा कश्चित् चेतनः भोक्ता अस्ति इति स्वीक्रियते। स च भोक्ता बुद्ध्याद्यतिरिक्तः चेतनः पुरुषः इति अङ्गीकर्तव्यम् इति प्रथमा व्याख्या।

अथवा भोग्याः दृश्याः बुद्ध्यादयः, न हि द्रष्टारम् अन्तरेण दृश्यता युक्ता तेषाम्, तस्मात् अस्ति द्रष्टा बुद्ध्याद्यतिरिक्तः, स च पुरुषः। तथाहि अनुमानम् - बुद्ध्यादयः द्रष्टृपूर्वका भवितुम् अर्हन्ति, दृश्यत्वात्, घटादिवत् इति। बुद्ध्यादयः हि दृश्याः सुखदुःखाद्यात्मकत्वात् पृथिव्यादिवत्। अतः दृश्यानां दृश्यत्वं तदा एव सङ्गच्छते यदा कश्चित् चेतनः द्रष्टा अभ्युपगम्यते, स च दर्शनकर्ता पुरुषः। तस्मात् अस्ति कश्चित् पुरुषः इति अङ्गीकर्तव्यम् इति द्वितीया व्याख्या। ननु असङ्गस्य पुरुषस्य दर्शनकर्तृत्वं न सम्भवति इति चेत् न, परमार्थतः पुरुषस्य दर्शनकर्तृत्वं नास्ति एव, किन्तु बुद्ध्युपाधिकम् एव तस्य द्रष्टृत्वं वक्तव्यम्, एवं द्रष्टृत्ववत् भोक्तृत्वम् अपि बुद्ध्युपाधिकं तस्य सम्भवति इति नास्ति उभयव्याख्यायाम् अपि कश्चित् दोषः।

## १.११.५) कैवल्यार्थं प्रवृत्तेः -

पुरुषस्वीकारे पञ्चमः हेतुः हि "कैवल्यार्थं प्रवृत्तेश्च" इति। कैवल्यं नाम आत्यन्तिकतया दुःखत्रयस्य विनाशः। तच्च कैवल्यं पुरुषं दुःखत्रयात् व्यावर्तयति। शास्त्राणां दिव्यलोचनानां महर्षीणां च दृश्यते कैवल्याय प्रवृत्तिः। दुःखाद्यात्मकाः हि बुद्ध्यादयः स्वभावात् वियोजयितुं न शक्यन्ते। बुद्ध्याद्यतिरिक्तस्य तु पुरुषस्य दुःखादिभ्यः वियोगः शक्यसम्पादः। तस्मात् महर्षीणां कैवल्यार्थं प्रवृत्तिः दृश्यते इति कारणात् बुद्ध्याद्यतिरिक्तः पुरुषः कश्चित् अस्ति यस्य दुःखत्रयविनाशरूपं कैवल्यम् इच्छन्ति महर्षयः इति सिद्ध्यति। इत्थं पुरुषस्य सद्भावे पञ्च हेतवः सांख्यकारिकायां प्रतिपादिताः।



## १.१२) पुरुषस्य बन्धमोक्षौ -

दर्शनानां मुख्यविषयेषु अन्यतमः तावत् परमपुरुषार्थः मोक्षः। मोक्षाय एव वस्तुतः समेषां दर्शनानां प्रवृत्तिः। सांख्यसिद्धान्ते अपि बन्धमोक्षव्यवस्था आलोचिता। ननु सांख्यसिद्धान्ते पुरुषः हि असङ्गः निर्विकारः च। अतः स केनचित् कर्मणा न लिप्यते, अतः तस्य कर्तृत्वम् अपि न सम्भवति। तेन च धर्माधर्मयोः उत्पत्तिः अपि न सम्भवति। धर्माधर्मयोः अभावे सुखदुःखयोः उत्पत्तिः न सम्भवति। दुःखस्य अनुत्पत्तौ दुःखसम्बन्धरूपः बन्धः, दुःखध्वंसरूपः मोक्षः च पुरुषे न सम्भवतः। अतः पुरुषस्य बन्धः मोक्षः वा नैव सङ्गच्छते सांख्यसिद्धान्ते इति चेत् वाढम्, यद्यपि शास्त्रे पुरुषस्य बन्धमोक्षौ इति उच्यते तथापि वस्तुतः बन्धमोक्षौ बुद्धावेव भवतः, पुरुषस्य पद्मपलाशवत् निर्लेपत्वात्। पुरुषे तु विद्यमानायां बुद्धौ बद्धत्वम्, अविद्यमानायां च तस्यां मुक्तत्वम् उपचर्यते। सृष्ट्यारम्भे सर्वतः प्रथमं बुद्धिरेव प्रकृतितः उत्पद्यते इति प्रकृतेः परिणामो बुद्धिः। बुद्धेरेव महत्तत्त्वम् अन्तःकरणं चेति नामान्तरम्। सांख्यसिद्धान्ते बुद्धावेव सुखदुःखे तिष्ठतः। अस्या एव सुखदुःखयोश्छाया जीवात्मनि पतति, तत एवात्मा सुखदुःखवान् प्रतीयते। इयमेव छाया पुरुषस्य संसारः। यदा च प्रकृतिपुरुषयोः विवेकज्ञानात् बुद्धेः नाशो भवति, तदा एव तदीयसुखदुःखयोः छायायाः अपि नाशो जायते इति आत्मा अपि शुद्धः अवशिष्यते। इदं प्रकृतिपुरुषविवेकज्ञानमेव विवेकख्यातिः सदसत्ख्यातिर्वा उच्यते। तत्त्वसाक्षात्कारे विवेकख्यातौ वा सत्यां पुरुषः त्रिगुणात्मिकायाः प्रकृतेः बन्धनात् मुक्तो भवति, स तदानीं रङ्गमञ्चस्थदर्शकः इव तां प्रेक्षते, सा प्रकृतिरपि अस्मै करणीयं स्वं कार्यं न करोति। तदा पुरुषः आत्मनः शुद्धं स्वरूपं साक्षात्करोति। इयमेव अवस्था मोक्ष इति उच्यते। उच्यते च सांख्यकारिकायाम् -

**तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित्।**

**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।। इति।** [६२]



## पाठगतप्रश्नाः-३

१३. पुरुषस्य सद्भावे कति हेतवः कारिकायां निगदिताः।

(क) पञ्च (ख) सप्त (ग) अष्टौ (घ) नव

१४. किं नाम गुणत्रयम्।

१५. पुरुषस्य बन्धः कथम्।

१६. पुरुषस्य मोक्षः कथम्।

१७. कैवल्यं नाम किम्।

१८. सुखं नाम किम्।

१९. दुःखं नाम किम्।

२०. पुरुषस्य अधिष्ठातृत्वे कापिलसूत्रं किम्।



## पाठसारः

अस्मिन् पाठे आदौ सांख्यशब्दस्य अर्थविषये विचारितम्। तत्र पञ्चविंशतिसंख्यासम्बन्धित्त्वात् सांख्यमिति अनेकेषां मतम्। सांख्यदर्शनस्य प्रवर्तकाचार्यः यद्यपि महर्षिः कपिलः तथापि तस्य ग्रन्थः इदानीं नोपलभ्यते इति कारणात् इदानीम् उपलभ्यमाना ईश्वरकृष्णविरचिता सांख्यकारिका एव सांख्यदर्शनस्य प्रमाणग्रन्थः इति स्वीक्रियते। तत्र सांख्यदर्शने पञ्चविंशतिः तत्त्वानि स्वीक्रियन्ते। तेषां च अस्ति चतुर्धा विभागः। प्रतिदर्शनमिव सांख्यदर्शनस्यापि प्रवृत्तये कारणं हि दुःखत्रयस्य आत्यन्तिकतया विनाशः। स च विनाशः प्रकृतिपुरुषविवेकेन सिध्यति इति प्रकृतिपुरुषविवेकाय तयोः स्वरूपज्ञानाय पुरुषस्वरूपं विचारितम्। पुरुषो हि असङ्गः निर्विकारः अकर्ता चेतनः साक्षी केवलश्च। पुरुषस्य अस्तित्वसिद्धये पञ्च हेतवश्च निगदिताः - (क) संघातपरार्थत्वात्, (ख) त्रिगुणादिविपर्ययात्, (ग) अधिष्ठानात्, (घ) भोक्तृभावात्, (ङ) कैवल्यार्थं प्रवृत्तेः च इति।



## पाठान्तप्रश्नाः

१. सांख्यदर्शनस्य आचार्याणां ग्रन्थानां च विषये परिचयः प्रदीयताम्।
२. पुरुषस्य स्वरूपं संक्षेपेण प्रतिपाद्यताम्।
३. सांख्यशब्दार्थविषये लघुटिप्पणीमेकाम् आरचत।
४. साख्यदर्शनस्य प्रवृत्तये किं तावत् कारणमिति समासेन प्रतिपाद्यताम्।
५. सांख्यनये केवलविकृतिनां परिचयः प्रदीयताम्।
६. पुरुषस्य बन्धमोक्षविषये लघुटिप्पणीं लिखत।
७. के किमर्थं प्रकृतिविकृतयः इति अभिधीयन्ते।
८. पुरुषसद्भावे यानि कारणानि सांख्यकारिकायां निगदितानि तेषां संक्षेपेण परिचयः प्रदीयताम्।



## पाठगतप्रश्नानाम् उत्तराणि -

१. सांख्य-योग-न्याय-वैशेषिक-पूर्वमीमांसा-उत्तरमीमांसाख्यानि षट् आस्तिकदर्शनानि।
२. एतानि दर्शनानि वेदस्य प्रामाण्यम् अङ्गीकुर्वन्ति तस्मात् एतानि आस्तिकदर्शनानि।
३. कपिलः।
४. ईश्वरकृष्णेन।
५. आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम् च।



६. आत्यन्तिकदुःखत्रयनिवृत्तिः।

७. केवलप्रकृतिः, केवलविकृतयः, प्रकृतिविकृतयः, अनुभयरूपश्चेति।

८. पुरुषः।

९. आकाशं वायुः अग्निः जलं पृथिवी चेति पञ्च महाभूतानि, श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणम् चेति पञ्च ज्ञानेन्द्रियाणि, वाक्-पाणि-पाद-पायूपस्थानि इति पञ्च कर्मेन्द्रियाणि, मनश्चेति षोडश पदार्थाः केवलविकृतयः।

१०. महदहङ्कारशब्दस्पर्शरूपरसगन्धा इति सप्त पदार्थाः प्रकृतिविकृतयः।

११. प्रधानं हि सर्वेषां कारणं, किन्तु तस्य किमपि कारणान्तरं नास्ति, तस्मात् स केवलप्रकृतिः कारणमात्रमित्यर्थः।

१२. सांख्यनये पुरुषः साक्षी केवलः द्रष्टा अकर्ता मध्यस्थः च।

१३. क) पञ्च हेतवः निगदिताः - (१) संघातपरार्थत्वात्, (२) त्रिगुणादिविपर्ययात्, (३) अधिष्ठानात्, (४) भोक्तृभावात्, (५) कैवल्यार्थं प्रवृत्तेः च।

१४. सत्त्वं रजः तमः इति गुणत्रयम्।

१५. बुद्ध्या सह पुरुषस्य सम्बन्धः एव बन्धः।

१६. बुद्ध्या सह पुरुषस्य सम्बन्धनाश एव मोक्षः।

१७. कैवल्यं नाम आत्यन्तिकतया दुःखत्रयस्य विनाशः।

१८. अनुकूलवेदनीयं सुखम्।

१९. प्रतिकूलवेदनीयं दुःखम्।

२०. "तत्सन्निधानादधिष्ठातृत्वं मणिवत्" इति।

॥ इति प्रथमः पाठः ॥



## २

# सांख्यदर्शने प्रकृतिपुरुषगुणविचारः

## प्रस्तावना

सांख्यदर्शनं हि षट्सु भारतीयेषु आस्तिकदर्शनेषु प्राचीनतमम् इति प्रसिद्धिः। तत्र पञ्चविंशतिः तत्त्वानि स्वीक्रियन्ते। तेषु मुख्यं तत्त्वद्वयं तावत् पुरुषः प्रकृतिश्चेति। प्रकृतेरेव विकारभूतानि इतराणि त्रयोविंशतितत्त्वानि। प्रकृतिः पुरुषाद् भिन्नः इति विवेकज्ञानेन च भवति पुरुषस्य अपवर्गः। परन्तु प्रकृतिपुरुषविवेकज्ञानाय प्रकृतेः पुरुषस्य च स्वरूपं सम्यक्तया ज्ञातव्यम्, तेनैव वस्तुतः इयं प्रकृतिः पुरुषाद्भिन्नः, पुरुषश्च प्रकृतेः भिन्नः इति विवेकज्ञानं जायेत। प्रकृतिपुरुषस्वरूपज्ञानमन्तरा विवेकख्यातिः नैव सम्भवति इत्यतः प्रकतिपुरुषस्वरूपं तत्सम्बन्धिविषयाः च आलोचनीयाः।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- सांख्यदर्शने पुरुषाणां बहुत्वं किमर्थं स्वीक्रियते इति ज्ञायते।
- सांख्यदर्शने प्रकृतिः नाम किमिति विस्तरेण परिचयः लप्स्यते।
- किमर्थं प्रधानतत्त्वं स्वीक्रियते इति ज्ञायेत।
- सत्त्वरजस्तमोगुणानां विस्तरेण परिचयः लभ्यते।
- सांख्यनये पुरुषस्य चेतनत्वेऽपि अकर्तृत्वम्, बुद्धेश्च अचेतनत्वेऽपि कर्तृत्वं कथम् इति स्पष्टं भविष्यति।
- प्रधानं किमर्थम् जगतः कर्तृ इति ज्ञास्यते।
- प्रकृतेः प्रवृत्तिः किमर्था इति ज्ञास्यते।

## २.१) पुरुषबहुत्वम्

पुरुषस्य अस्तित्वं प्रतिपाद्य स च पुरुषः सर्वशरीरेषु एकः, उत अनेकः इति विचार्यते सांख्यकारिकायाम्। पुरुषः एकः वा बहवः वा इति विषये दर्शनसम्प्रदायेषु विद्यते मतभेदः। तत्र सांख्यसम्प्रदायः बहवः पुरुषाः सन्ति इति स्वीकरोति। तस्मात् सांख्याः बहुपुरुषवादिनः इति उच्यते। कथं ते पुरुषाणां बहुत्वं स्वीकुर्वन्ति इति विषये सन्ति तेषां स्वकीयाः युक्तयः। सांख्यकारिकायाम् उच्यते



"**पुरुषबहुत्वं सिद्धम्**" इति। केन सिद्धं पुरुषबहुत्वम्। "**लक्षणप्रमाणाभ्यां वस्तुसिद्धिः**" इति वचनम् अनुसृत्य अत्र कारिकायां त्रयः हेतवः निगदिताः। ते हि (क) जननमरणकरणानां प्रतिनियमात्, (ख) अयुगपत् प्रवृत्तेः, (ग) त्रैगुण्यविपर्ययात् चेति। तथाहि सांख्यकारिका-

> **जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेश्च।**
> **पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।।** इति। [सांख्यकारिका-१८]

## २.१.१) जननमरणकरणानां प्रतिनियमात्

जन्ममृत्यु-अन्तःकरणादित्रयोदशकरणानां प्रतिनियमवशात् पुरुषबहुत्वम्। प्रतिपुरुषं नियमः प्रतिनियमः व्यवस्था इत्यर्थः। प्रत्येकं पुरुषस्य जन्म मरणम् अन्तःकरणादि च व्यवस्थितं नाम पृथक् पृथक्। ननु पुरुषस्य अनाद्यनन्तत्वात् तस्य उत्पत्तिविनाशासम्भवात् किमर्थं तस्य जन्म मृत्युः च उच्यते इति चेत् उच्यते यत् - निकायविशिष्टाभिः अपूर्वाभिः देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्य अभिसम्बन्धः जन्म। निकायशब्देन अत्र देहेन्द्रियमनोऽहङ्कारादीनां मिलिततया एकप्रयोजनसाधकत्वम् उच्यते। अभिसम्बन्धः इति पदेन अभिमानरूपः सम्बन्धः द्योत्यते, न तु संयोगादिरूपः। देहेन्द्रियादिभिः सह मिलितावस्थायां निकायं संघातं वा स्वकीयं मन्यमानेन पुरुषेण सह निकायस्य भोक्तृभोग्यरूपः सम्बन्धः भवति। एवं निकायस्य बहुत्वकारणात् पुरुषस्य अपि बहुत्वं सिद्ध्यति। मरणं नाम स्वीकृतानां देहादीनां परित्यागः, भोक्तृभोग्यसम्बन्धस्य विनाशः, न तु आत्मनः विनाशः, आत्मनः कूटस्थनित्यत्वात्। सांख्यनये बाल्ययौवनादिदेहभिन्नत्वं नास्ति, अस्तेषाम् अपूर्वत्वं न स्वीक्रियते, मातृगर्भस्थस्य देहस्य एव अपूर्वत्वम्। एवं जननमरणकरणानां या खलु व्यवस्था सा सर्वशरीरेषु एकस्मिन् पुरुषे न उपपद्यते। अर्थात् पुरुषः एकः भवति चेत् एकस्य जनने सति सर्वेषां जन्म भवेत्, एकस्य च मरणे सति सर्वेषां मरणं भवेत्, एकः अन्धः भवति चेत् सर्वे अन्धाः भवेयुः, एकस्य मनसः वैकल्ये सति सर्वेषां मनःसु वैकल्यं भवेत् इति अव्यवस्था स्यात्। प्रतिशरीरं पुरुषः भिन्नः इति कारणात् प्रत्येकं पुरुषाणां जन्म, मरणं, इन्द्रियादीनां च भिन्नत्वं सिद्ध्यति।

ननु नास्ति पुरुषबहुत्वस्वीकारेण प्रयोजनम्, एकस्य पुरुषस्य उपाधिभेदेन अनेकत्वसम्भवात्, आकाशादिवत्। यथा उपाधिभेदात् घटाकाशः, पटाकाशः इत्यादिकं व्यवह्रियते तद्वद् इहापि विविधदेहोपाधिकपुरुषस्वीकारः कार्यः। परन्तु तथा सति पाणिस्तनाद्युपाधिभेदेन अपि जन्ममरणप्रसङ्गः समायाति। न हि हस्ते भग्ने कोऽपि जनो मृतः इति कथ्यते, न वा स्तने जाते युवतिः जाता इति ब्रूते। अतः देहभेदेन पुरुषः भिन्नः, इदमेव तत्त्वम्।

## २.१.२) अयुगपत् प्रवृत्तेः

अयुगपत् प्रवृत्तेश्च पुरुषाणां बहुत्वं स्वीकार्यम्। तथाहि- प्रवृत्तिः नाम प्रयत्नलक्षणा, यद्यपि सा अन्तःकरणवर्तिनी तथापि गौणतया पुरुषे आरोप्यते। यथा भृत्यस्य जयः प्रभौ आरोप्यते तद्वत् स्वस्वामिभावसम्बन्धकारणात् अन्तःकरणस्थितप्रयत्नस्य पुरुषे आरोपः भवति। एतादृशः प्रयत्नः प्रतिशरीरं भिन्नः तस्मात् पुरुषबहुत्वम् अङ्गीकार्यम्। यदि पुरुषः एकः एव स्वीक्रियते तर्हि एकस्मिन् शरीरे



प्रयतमाने स एव सर्वशरीरेषु एक इति सर्वत्र प्रयतेत, ततश्च सर्वाणि एव शरीराणि युगपत् चालयेत्। परन्तु पुरुषाणां नानात्वस्वीकारे सति स दोषः नैव सम्भवति। सर्वेषां तु एतत् प्रत्यक्षसिद्धं यत् सर्वेषां प्रवृत्तिः कथमपि युगपत् न भवति, अतः सर्वेषां प्रवृत्तिभेदात् स्वीकार्यं पुरुषेषु अपि भिन्नत्वम्। तस्मात् सन्ति पुरुषाः बहवः।

### २.१.३) त्रैगुण्यविपर्ययात्

त्रैगुण्यविपर्ययात् च स्वीकार्यं पुरुषाणां बहुत्वम्। तथाहि - सत्त्वं रजः तमः इति त्रयः गुणाः, तेषां भावः त्रैगुण्यम्। त्रैगुण्यस्य विपर्ययः अन्यथात्वं त्रैगुण्यविपर्ययः। केचित् खलु प्राणिनः जितेन्द्रियाः सत्त्वबहुलाः भवन्ति, यथा देवादयः। केचित् खलु रजोबहुलाः भवन्ति, यथा मनुष्याः। केचन पुनः तमोबहुलाः भवन्ति, यथा तिर्यग्योनयः। एकः एव पुरुषः इति स्वीक्रियते चेत् ईदृशः त्रिगुणानाम् अन्यथाभावः न सम्भवति। अर्थात् एकपुरुषस्वीकारे एकस्य पुरुषस्य रजोबाहुल्यं तस्यैव सत्त्वबाहुल्यं, तस्यैव तमोबाहुल्यं च स्वीकरणीयम्, यद्धि युक्तितः नैव सङ्गच्छते। बहुपुरुषसत्त्वे एव एकस्य रजोबाहुल्यम्, अन्यस्य सत्त्वबाहुल्यम्, अन्यस्य च तमोबाहुल्यं स्वीकर्तुं शक्यते। तस्मात् स्वीकार्यं पुरुषाणां बहुत्वम् इति सांख्यकारिकाकारस्य ईश्वरकृष्णस्य मतम्।

आत्मनः एकत्वे 'कश्चित् पुरुषः बद्धः कश्चित् मुक्तः' इति बन्धमोक्षव्यवस्था न सम्भवति इति प्रतिशरीरम् आत्मा भिन्नः एव अस्ति। तथाहि कणादसूत्रम् – '**व्यवस्थातो नाना**' इति। सांख्यसूत्रम् अपि विद्यते – '**जन्मादिव्यवस्थातः पुरुषबहुत्वम्**' इति। एवम् एकस्मिन् जायमाने म्रियमाणे वा, सुखिनि दुःखिनि वा, बद्धे मुक्ते वा न इतरे जन्मादिभाजः भवन्ति इति या व्यवस्था सा न उपपद्यते यदि सर्वशरीरेषु एक एव पुरुषः अभ्युपगम्येत। तस्मात् पुरुषनानात्वम् एव अङ्गीक्रियते इति।

## २.२) मूलप्रकृतिः -

तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः। इयं न अन्यस्य कस्यचिद् विकृतिः। प्रकरोति प्रकर्षेण करोति कार्यम् उत्पादयतीति व्युत्पत्त्या प्रकृतिशब्दो निष्पद्यते। प्रकर्षश्च तत्त्वान्तरारम्भकत्वम्। तथा च यस्मात् तत्त्वान्तरम् उत्पद्यते तादृशः कारणविशेषः प्रकृतिशब्देन उच्यते। सा मूलप्रकृतिर्हि सत्त्वरजस्तमोगुणानां साम्यावस्थारूपा। मूलः च असौ प्रकृतिः च इति मूलप्रकृतिः। महदादेः कार्यकलापस्य मूलं हि एतद् प्रधानम्, न तु अस्य कारणान्तरं विद्यते। मूलप्रकृतेरपि कारणान्तरस्वीकारे अनवस्थादोषः समापतति। प्रधीयते क्रियते अनेन जगदिति, प्रधीयते निधीयते अस्मिन् प्रलयसमये जगदिति वा प्रधानम्। तच्च मृत्सुवर्णवत् अचेतनं चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्तते, न तु केनचित् प्रवर्त्यते।

## २.३) प्रधानसद्भावे मानम् -

पुरुषस्य सद्भावे किं प्रमाणमिति विषयः सांख्यकारिकायां विस्तरेण चर्चितः। प्रकृतिसद्भावे किं मानम् इति विषयोऽपि सामान्यतया विचारितः। तथाहि सांख्यकारिकायाम् आदौ सांख्यसम्मतानि



प्रमाणानि विचारितानि। तत्र पूर्वपक्षिभिः आक्षिप्यते यत् यथा गगनकुसुम-कूर्मरोम-शशविषाणादीनां प्रत्यक्षेण अविषयत्वात् अलीकत्वं सिद्ध्यति, तथैव प्रधानादिकम् गगनकुसुमादिवत् असत् प्रत्यक्षाविषयत्वात् इति स्वीकरणीयम्। एतस्य संशयस्य निराकरणाय प्रधानादीनां सिद्धये च उच्यते सांख्यकारिकायाम् -

**अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।**

**सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च।।** इति। [सांख्यकारिका - ७]

विषये विद्यमाने सत्यपि कथम् प्रत्यक्षेण न ज्ञातुं शक्यते इति विषये अष्टौ हेतवः सांख्यकारिकायां निगदिताः। १. अतिदूरात्, २. सामीप्यात् ३. इन्द्रियघातात् ४. मनोऽनवस्थानात्, ५. सौक्ष्म्यात् ६. व्यवधानात् ७. अभिभवात् ८. समानाभिहारात् चेति। अतिदूरकारणात् आकाशे उत्पतन् पक्षी न दृश्यते। अतिसामीप्यात् लोचनस्थम् अञ्जनं न दृश्यते। इन्द्रियघातः नाम अन्धत्वबधिरत्वादिः। अन्धत्वकारणात् समीपस्थं किमपि वस्तु न दृश्यते। मनोऽनवस्थानात् यथा - कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनम् इन्द्रियसन्निकृष्टम् अर्थं न पश्यति। सूक्ष्मताकारणात् इन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमनाः अपि न पश्यति। व्यवधानात् यथा - भित्तियवनिकादिभिः व्यवहितं राजदारादि न पश्यति कश्चित्। अभिभवः नाम बलवता दुर्बल्य आच्छादनम् तिरस्करणं वा। दिवसे सूर्यालोकेन अभिभवकारणात् ग्रहनक्षत्रादीनि न दृश्यन्ते। समानाभिहारः नाम सजातीयपदार्थमिश्रणम्। जलाशये वृष्टिजलं पृथक्तया न द्रष्टुं शक्यते समानाभिहारकारणात्। इत्थं सत्यपि वस्तुनि प्रत्यक्षेण न उपलभ्यते। एतेषु किं तावत् कारणं प्रधानादीनाम् अनुपलब्धौ इति चेदुच्यते -

**सौक्ष्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः।**

**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च।।** इति। [सांख्यकारिका - ८]

अभावात् न प्रधानादीनाम् अप्रत्यक्षत्वम् अपि तु सौक्ष्म्यात्। ननु अतिस्वल्पं परिमाणं सूक्ष्मशब्देन व्यपदिश्यते। परमाणूनां द्व्यणुकादीनां च सूक्ष्मपदेन व्यपदेशः दृश्यते। तथा किमत्र सूक्ष्मत्वम् इति चेत् न, प्रकृतिपुरुषौ न द्व्यणुकादिवत् क्षुद्रौ, तयोः विभुत्वात्। सर्वव्यापिपदार्थानां सूक्ष्मत्वकथनं तेन न सङ्गच्छते। ननु कथं तर्हि सूक्ष्मत्वस्य कारणत्वेन उपस्थापनम् इति चेद् वाचस्पतिमिश्रपादेन उच्यते - परमाणुप्रभृतिषु सूक्ष्मतासत्त्वात् एकाग्रचित्तव्यक्तीनामपि तदुपलब्धिर्न भवति। अतः सूक्ष्मतायाः एवं कश्चन अर्थः ग्राह्यः येन अणुपरिमाणवतां प्रकृतिपुरुषादिमहत्परिमाणवतां च ग्रहः भवेत्। अणुपरिमाणं महत्परिमाणं परममहत्परिमाणम् इति परिमाणत्रैविध्यम्। तत्र अणुपरिमाणं परमाणूनां नैयायिकमते मानसादीनां समस्ति। महत्परिमाणं क्षित्यादीनां मूर्तद्रव्याणां समस्ति। उच्यते च - **“परिच्छिन्नपरिमाणवत्त्वं मूर्तत्वम्”** इति। परममहत्परिमाणं पुरुषादिविभुपदार्थानाम्। विभुत्वं च **"सर्वमूर्तद्रव्यसंयोगित्वम्”** इति। यथा अणुपरिमाणस्य उद्भूतरूपवत्त्वाभावात् प्रत्यक्षं न भवति, तद्वत् परममहतोऽपि प्रमाणानवगतिरेव सूक्ष्मत्वस्य तात्पर्यार्थः। ननु सांख्यनये पुरुषः निर्गुणः, अतस्तत्र परममहत्परिमाणादिकम् असम्भवम् इति चेत् अत्रोच्यते निर्गुणशब्दः हि प्रस्तुतक्षेत्रे ज्ञानादिविशेषगुणानाम् अभावबोधकः, संख्यापरिमाणादीनां सामान्यगुणानां न। तस्मादेव प्रकृतिपुरुषसंयोगः स्वीक्रियते चेदपि पुरुषस्य निर्गुणत्वं व्याहतं न भवति।



एवं सौक्ष्म्यात् प्रधानादीनाम् प्रत्यक्षेण अनुपलब्धिः, न तु अभावात्। अपि च कार्यतः प्रधानादीनाम् उपलब्धिः जायते इति कारणात् न प्रधानादीनाम् असत्त्वम्। किं तत् कार्यं येन प्रधानस्य सत्त्वं प्रमाणीभवति इति चेत् उच्यते - महदादि तच्च कार्यम् प्रकृतिसरूपं विरूपं च इति। प्रधानस्य कार्यं महत्, महतः अहङ्कारः इत्येवम्प्रकारेण परम्परया पञ्च महाभूतानि एकादशेन्द्रियाणि च प्रधानस्य कार्यभूतानि। एतेषां कार्याणां कारणं केनचित् सदुपादानकेन भाव्यमिति कारणात् स्वीकार्यं प्रधानस्य सत्त्वम्। कार्यं हि कारणसजातीयं कारणात् च भिन्नं भवति इति नियमः। यथा दुग्धात् उत्पन्नं दधि वर्णादिभिः दुग्धसजातीयं परन्तु अम्लत्वादिभिः दुग्धभिन्नम्। एवं प्रकृतेः उत्पन्नं महदादि प्रकृतिसरूपं प्रकृतिविरूपं च।



## पाठगतप्रश्नाः-१

१. परिमाणत्रैविध्यं किम्।

२. बहुपुरुषवादिनः के।

क) नैयायिकाः ख) वैशेषिकाः ग) वेदान्तिनः घ) सांख्याः

३. पुरुषबहुत्वस्वीकारे कति हेतवः सांख्यकारिकाकारैः निगदिताः।

क) त्रयः ख) चत्वारः ग)पञ्च घ) सप्त

४. पुरुषबहुत्वप्रतिपादिका सांख्यकारिका का।

५. पुरुषबहुत्वे सांख्यसूत्रं किम्।

६. का मूलप्रकृतिः।

७. विषयः विद्यमानः चेदपि प्रत्यक्षेण ज्ञातुं न शक्यते इत्यत्र कति कारणानि सांख्यकारकाकारेण निगदितानि।

क) पञ्च ख) षड् ग) सप्त घ) अष्टौ

८. प्रधानादीनाम् अप्रत्यक्षत्वं कुतः।

क) अतिदूरात् ख) सौक्ष्म्यात् ग) व्यवधानात् घ) समानाभिहारात्

## २.४) प्रकृतिस्वरूपम् -

पुरुषः प्रकृतिः इति मूलं तत्त्वद्वयं सांख्यसिद्धान्ते। पुरुषः स्वयं स्वरूपतः सर्वविकाररहितः बुद्धितत्त्वप्रतिबिम्बितः सन् आत्मानम् अन्यथा चिन्तयन् संसारचक्रावर्ते चंक्रम्यमाणः दुःखायते। सत्त्वं पुरुषात् भिन्नम् इति ज्ञानात् पुरुषस्य भ्रान्तिः अपगच्छति, बुद्धिधर्माभिमानश्च तिरोभवति, भवति च अविवेकरूपात् बन्धात् मोक्षः। सत्त्वं पुरुषः न इति, पुरुषः न सत्त्वम् इति वा अन्योन्याभावप्रतीतिः एव सत्त्वपुरुषान्यथाख्यातिः। सत्त्वं चात्र प्रकृतिः एव। प्रकृतिपुरुषयोः भेदज्ञानरूपः विवेकः तदा एव



सम्भवति, यदा प्रकृतिपुरुषयोः सम्यक् ज्ञानं भवति, अर्थात् पुरुषस्य स्वरूपं किं, प्रकृतेश्च स्वरूपं किम् इति ज्ञानात् अनन्तरम् एव पुरुषः प्रकृतेः भिन्नः इति बोधः भवति। तस्मात् प्रकृतिपुरुषविवेकाय प्रकृतेः स्वरूपं ज्ञातव्यम्। व्यक्ताव्यक्तयोः सामान्यधर्मप्रस्तावकाले प्रकृतेः स्वरूपम् उच्यते सांख्यकारिकायाम् -

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**

**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥** इति। [सांख्यकारिका - ११]

अव्यक्तं हि प्रधानम्। तदेव प्रकृतिरिति उच्यते। सर्वाणि प्रकृतिजातानि अव्यक्ताभिधेयानि। त्रिगुणात्मिका हि प्रकृतिः। गुणानां सत्त्वरजस्तमसां साम्यावस्था हि प्रकृतिः। तथाहि सांख्यसूत्रम् - "**सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः**" इति। गुणत्रयं हि प्रकृतेः न धर्मः, किन्तु गुणत्रयात्मिका हि प्रकृतिः। तथाहि उच्यते - "सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति, तेषां गुणानां प्रकृतिस्वरूपत्वात्" इति। प्रकृतिर्हि कारणरूपा, न तु कार्यरूपा। अतः सा नित्या, प्रकृतेः अपि कारणान्तरकल्पनायाम् अनवस्थाप्रसङ्गः। कारणगुणाः कार्ये अनुवर्तन्ते इति नियमानुसारेण प्रकृतेः उत्पन्नं मदहादि व्यक्तजातम् अपि त्रिगुणम्। यथा कृष्णतन्तुजः पटः कृष्णः एव भवति, तद्वत्। अत्र श्लोके त्रिगुणमिति पदेन सत्त्वादिगुणानां धर्माः सुखदुःखमोहाः ग्राह्याः, न तु धर्मिणः सत्त्वरजस्तमांसि। धर्मधर्मिणोः अभेदम् आदाय सुखादयः धर्माः एवात्र गुणपदेन अभिप्रेताः न तु सत्त्वादयः धर्मिणः। तेन प्रकृतेः सुखदुःखमोहात्मकत्वम् अस्ति इति सिद्ध्यति।

अविवेकित्वं च व्यक्ताव्यक्तयोः धर्मविशेषः। अत्र अविवेकिता नाम सम्भूयकारिता। न हि किञ्चिदेकं पर्याप्तं स्वकार्ये, अपि तु सम्भूय, तत्र न एकस्मात् कस्यचित् केनचित् सम्भवः। अथवा प्रधानं स्वतः न विविच्यते इति कारणात् अविवेकि। महदादीनि तत्त्वानि अपि प्रधानात् न विविच्यन्ते इति कारणात् अविवेकीनि। अमी गुणाः इदं व्यक्तम्, अमी गुणाः इदं च अव्यक्तम् इति विवेकः कर्तुं न शक्यते इति कारणात् व्यक्तादीनि अव्यक्तं च अविवेकि। विषयः इति पदेन न आन्तरं विज्ञानं प्रधानादितत्त्वम् इति स्पष्टीकृतम्, एतेन विषयपदस्य अर्थः बाह्यः ग्राह्यः भोग्यः पदार्थः इति अङ्गीकर्तव्यः। प्रधानं हि सुखदुःखमोहात्मकतया सर्वैः पुरुषैः भोग्यम्। प्रधानं हि सामान्यम् इति उच्यते। अनेकैः पुरुषैः गृह्यते इति कारणात् तत् सामान्यम्। यथा घटपटादिकम् अनेकैः गृह्यते, यथा वा नर्तकीभ्रूलताभङ्गः बहूनां बहूनां प्रत्यक्षगोचरो भवति, तथैव व्यक्ताव्यक्तयोः उभयोः अपि बहुपुरुषग्राह्यत्वं समस्ति, पुरुषबहुत्वात्। अव्यक्तं प्रधानं तथा व्यक्तानि सर्वाणि अपि अचेतनानि। प्रसवधर्मित्वं व्यक्ताव्यक्तयोः अपरः धर्मः। बुद्धेः अहङ्कारः, ततः इन्द्रियाणि तन्मात्राणि च, तेभ्यः तन्मात्रेभ्यः भूतानि जायन्ते। एवं प्रधानम् अपि बुद्धिं प्रसूते। तेन उभयोः प्रसवधर्मित्वं सिद्ध्यति। प्रसवधर्मित्वस्य अर्थस्तावत् परिणामित्वम् इति। इत्थं व्यक्ताव्यक्तयोः साधर्म्यविचारप्रसङ्गे अव्यक्तस्य ये धर्माः अत्र निगदिताः ते प्रकृतेः धर्माः इति ज्ञेयाः।

## २.५) गुणत्रयस्वरूपम् -

सत्त्वरजस्तमसां साम्यावस्था हि प्रकृतिः इति उच्यते। किं तावद् एतेषां गुणत्रयाणां स्वरूपम् इति चेत् उच्यते यत् एते प्रकाश-प्रवृत्ति-नियमार्थाः, प्रीत्यप्रीतिविषयात्मकाः, अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयः च। तथाहि उच्यते श्रीमता ईश्वरकृष्णेन सांख्यकारिकायाम् -



**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**

**अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः।।** इति। [१२]

गुणाः सत्त्वरजस्तमांसि प्रीत्यप्रीतिविषादात्मकाः सुखदु-खमोहस्वरूपाः, प्रकाश-प्रवृत्ति-नियमार्थाः बोधक्रियावरण-प्रयोजनाः च, तथा अन्योऽन्याभिभवाश्रय-जनन-मिथुन-वृत्तयः परस्पर-दुर्बलीकरण-साहाय्यापेक्षा-परिणाम-साहचर्यक्रियाः इति सान्वयार्थाः।

प्रीतिश्च अप्रीतिश्च विषादश्चेति प्रीत्यप्रीतिविषादाः इति। ते आत्मनः भावाः स्वरूपाणि येषां ते प्रीत्यप्रीतिविषादात्मकाः इति। प्रकाशश्च प्रवृत्तिश्च नियमश्चेति द्वन्द्वे प्रकाशप्रवृत्तिनियमाः इति रूपम्। प्रकाशो हि बुद्धिवृत्त्यादिरूपः आलोकः, प्रवृत्तिः यत्नः चालनं वा, नियमः प्रकाशक्रियाभ्यां शून्यत्वम्, तयोः प्रतिबन्धः इत्यर्थः। एते अर्थाः प्रयोजनानि येषां ते प्रकाशप्रवृत्तिनियमार्था इति बहुव्रीहिः। च इति निपातः समुच्चयार्थः। अन्यम् अन्यं प्रति इति अन्योन्यं परस्परम् इत्यर्थः। अभिभवश्च आश्रयश्च जननं च मिथुनं चेति अभिभवाश्रयजननमिथुनानि। अन्योन्यपदं वृत्तिपदं च चतुर्षु अपि अन्वेति। अभिभवः नाम एकेन अन्यस्य दुर्बलीकरणम्। अन्योन्यम् अभिभवाश्रयजननमिथुनानि वृत्तयः येषां ते अन्योन्याभिभवाश्रयजननमिथुनवृत्तयः।

सत्त्वरजस्तमांसि त्रयः गुणाः। तेषां स्वरूपं प्रयोजनं क्रिया च प्रतिपाद्यते अनेन पद्येन। यथासंख्यन्यायेन त्रिषु एव पदेषु गुणत्रयस्य अन्वयः द्रष्टव्यः। तथाहि सत्त्वस्य सुखात्मकत्वं, रजसः दुःखात्मकत्वं, तमसश्च मोहात्मकत्वं ध्येयम्। सत्त्वादित्रयाणां भावत्त्वात् आत्मशब्देन निर्देशनम्। न तु प्रीतिः दुःखाभावात् अन्यत्, न वा दुःखं प्रीत्यभावात् अन्यदिति ध्येयम्। परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेः एकस्य असिद्धेः उभयासिद्धिः।

प्रकाशप्रवृत्तिनियमाश्च तेषां प्रयोजनम्। तथाहि सत्त्वं प्रकाशार्थम्, रजश्च प्रवृत्तिप्रयोजनकं, तमश्च नियमनार्थम्। अन्योन्येत्यनेन तेषां क्रिया निगदिताः। सत्त्वं रजस्तमसी अभिभूय आत्मनः शान्तवृत्तिं प्रतिलभते। एवं रजः सत्त्वतमसी अभिभूय घोरवृत्तिं, तमश्च सत्त्वरजसी अभिभूय मूढवृत्तिं प्रतिलभते। अत्र आश्रयशब्देन न आधाराधेयता निरुच्यते, अपि तु मिथः सापेक्षत्वम्। अतः सत्त्वं प्रवृत्तिनियमौ आश्रित्य रजस्तमसोः प्रकाशेन उपकरोति। रजस्तमसोः विषये अपि एवमेव बोध्यम्। एतत्त्रयेषु अन्यः अन्यतमं जनयति। जननञ्च परिणामः, न च गुणानां सदृशरूपः, ते च अन्योऽन्यसहचराः अविनाशाभाववर्तिनः। भवति च अत्र आगमः -

**अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः।**

**रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः।।**

**तमसश्चापि मिथुने ते सत्त्वरजसी उभे।**

**उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।।** इति।

इत्थं प्रीत्यप्रीतीत्यादिश्लोकेन गुणत्रयस्य सामान्यं स्वरूपप्रयोजनादिकं निगद्य विशेषरूपेण गुणानां स्वरूपकथनाय कारिका प्रस्तूयते ईश्वरकृष्णेन -

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।**

**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः।।** इति। [१३]



सत्त्वं लाघवान्वितं विषयप्रकाशकं च, रजः परेषां चालकम्, तमश्च गौरवान्वितम्, आवरकं च सर्वेषाम्। एते गुणाः परस्परविरोधशीलाः। यथा सत्त्वगुणे लघुत्वं राजते, तमसि च गुरुत्वम्; अतः एतद्द्वयं परस्परविरोधि। रजस्तावत् चलं क्रियाशीलं, सत्त्वतमसी निष्क्रिये स्थावरे, सत्त्वं हि प्रकाशकं तमश्च आवरकम्। एवं लाघवगौरव-क्रियाशीलत्वनिष्क्रियत्व-प्रकाशत्वावरकत्वादयः परस्परविरुद्धधर्माः गुणेषु पदं कुर्वते। अत एतेषां मिलनजकार्योत्पत्तिः आकाशप्रसूनम् इव प्रतीयते, विरुद्धानां तेषां मिलनासम्भवात्। परस्परविरोधिनः ते मिलिताः स्युश्चेत् परस्परध्वंसानिवार्यतां स्थिरीकुर्युः। यथा सुन्दोपसुन्दनामकं रक्षोद्वयं देवदुहितुः दिव्यमूर्तिदर्शनेन परस्परप्रतिद्वन्द्विनौ सन्तौ परस्परं प्रहरन्तौ उपरतौ तद्वत् परस्परविरुद्धस्वभावगुणाः अपि मिलिताः स्युश्चेद् विनाशं गच्छेयुः। ननु तथात्वे कथम् एतेषां परस्परजननमिथुनवृत्तिः सिध्येत् इति चेदुच्यते - प्रदीपवच्चार्थतो वृत्तिः इति। न हि कार्योपादनकाले गुणत्रयं स्वतन्त्रतया स्वस्वभावं शक्तिं वा प्रकाशयति, भोक्तुः अदृष्टस्य प्रभावेनैव ते परस्परविरुद्धभावं परित्यज्य एकक्रियासम्पादनं कुर्वन्ति। ननु लोके परस्परविरुद्धानाम् एककृत्यकरणादर्शनात् किमेतद् अवान्तरकल्पनं न। इति चेदुच्यते, यथा तुलानिर्मितवर्तिः अग्निना नश्यते, तैलं च अग्निना लयमेति, क्वचित् प्रदीपशिखासु तैलक्षेपे अग्निः निर्वपति, परन्तु परस्परविरुद्धास्ते तैलवर्त्यग्नयः मिलिताः सन्तः रूपं प्रकाशयन्ति। किञ्च, अग्निः ज्वलनशीलः लघुः, वर्तितैले ज्वलनासमर्थे गुरुस्वभावे च। तैलं च तरलं, वर्तिश्च कठिना। एवंविधविरुद्धस्वभावानां तैलवर्त्यग्नीनां रूपप्रकाशरूपैककृत्यकरणसम्भवात् कथं सत्त्वरजस्तमांसि एककृत्यसम्पादने समर्थानि न भवेयुः।

ननु वर्तितैलयोः परस्परविरोधित्वं नास्ति। वर्तिः तैलशोषणं करोति इति सत्यं, परन्तु तेन तैलं न लयमेति। तेन तैलवर्त्योः परस्परविरुद्धत्वाभावात् सत्त्वरजस्तमोभिः सह तैलवर्त्यग्नीनां सामञ्जस्याभावात् दृष्टान्तदार्ष्टान्तिकयोः समानताभावात् न एतदुदाहरणं न सङ्गतम् इति आशङ्क्य वाचस्पतिमिश्रपादैः वातपित्तश्लेष्मणाम् उदाहरणं प्रस्तूयते। वैद्यशास्त्रनये वातपित्तश्लेष्माणो हि परस्परविरुद्धस्वभावविशिष्टाः। मिलिततया एव ते शरीराधारणरूपं कार्यं कुर्वन्ति, एतद्धातुत्रयवैषम्ये सति शरीररक्षणं व्याहतं भवति। ननु सत्त्वादिगुणत्रयस्य समभावस्थितौ तुल्यबलताप्रसङ्गः आगच्छेत्, तुल्यबलानामेव परस्परविरोधदर्शनात् तदा सत्त्वादीनां ध्वंसाशङ्का समापतेत् इति चेत् न, वस्तुतस्तु तेषु न तुल्यबलता, अपि तु गौणप्रधानभावः तिष्ठति, तस्मादेव ते एककृत्यसम्पादनसमर्थाः भवन्ति। प्रकाशादिकृत्ये सत्त्वं प्रधानम् इतरे सहकारिणी, प्रवृत्तौ रजःप्रधानम् इतरे सहकारिणी, नियमनादौ तमः प्रधानम् इतरे सहकारिणी। तेन वातपित्तदृष्टान्ते वातपित्तादीनां समभावस्थितौ कार्योत्पत्तेः दार्ष्टान्तिके सत्त्वरजस्तमःप्रसङ्गे विषमतया स्थितेषु गुणेषु कार्योत्पत्तेः दृष्टान्तदार्ष्टान्तिकयोः वैषम्यम्। तेन प्रदीपोदाहरणम् एवात्र सुसमञ्जसम्। वर्तितैलाग्नयः परस्परविरोधिनोऽपि प्रदीपरूपतां प्राप्ताः परस्परानुगताश्च सन्तः रूपप्रकाशादिरूपं कार्यं कुर्वन्ति। तस्मादेव ईश्वरकृष्णेन प्रदीपस्यैव उदाहरणम् उदीर्यते।





## पाठगतप्रश्नाः-२

९. किं नाम सत्त्वपुरुषान्यथाख्यातिः।

१०. प्रकृतेः त्रिगुणात्मकत्वे सांख्यसूत्रं किम्।

११. अविवेकित्वं नाम किम्।

१२. प्रधानं किमर्थं सामान्यमिति उच्यते।

१३. किंस्वरूपास्त्रयो गुणाः।

१४. कस्य गुणस्य धर्मः प्रकाशः।

क) सत्त्वस्य ख) रजसः ग) तमसः

१५. गुणानां कानि प्रयोजनानि।

## २.६) पुरुषस्य अकर्तृत्वं बुद्धेर्जडत्वं च

पुरुषः कर्तृत्वरहितः तथापि पुरुषे कर्तृत्वम् आरोप्यते, बुद्धिश्च अचेतना तथापि बुद्धौ चेतनत्वम् आरोप्यते इत्यत्र कारणं हि पुरुषबुद्ध्योः भेदाग्रहणम्। परमार्थतस्तु पुरुषस्य अकर्तृत्वं बुद्धेश्च जडत्वम्। अत एव "मम इदं कर्तव्यम्" इत्येवं बुद्धौ पुरुषसंबन्धः घटादिविषयसम्बन्धः वृत्तिज्ञानरूपव्यापारसम्बन्धः इति सम्बन्धत्रयं प्रतीयते। तत्र 'मम' इत्यनेन बुद्धौ चेतनपुरुषसम्बन्धः, स्वच्छदर्पणे मुखप्रतिबिम्बवद् अत्यन्तस्वच्छायां बुद्धौ चेतनपुरुषप्रतिबिम्बात्। तत्र यथा दर्पणे मुखस्य नास्ति कश्चित् वास्तविकः सम्बन्धः, किन्तु प्रतिबिम्बमात्रमेव सम्बन्धः अस्ति, तथा स्वच्छबुद्धौ पुरुषस्यापि वास्तविकसम्बन्धः नास्ति, किन्तु प्रतिबिम्बमात्रमेव। पुरुषबुद्ध्योः परस्परं भेदाग्रहणात् द्वयोः एकत्वाभिमानवशात् बुद्धौ पुरुषीयसम्बन्धः प्रतीयते। 'इदम्' इत्यनेन बुद्धौ घटादिविषयसम्बन्धः। तत्र बुद्धेः चक्षुरादीन्द्रियद्वारा जायमानः "अयं घटः" इत्यादिज्ञानरूपः परिणामः एव घटादिविषयाणां बुद्धौ सम्बन्धः। बुद्धौ घटादिविषयसम्बन्धश्च मुखश्वासाभिहतदर्पणे मालिन्यसम्बन्ध इव वास्तविक एव। "कर्तव्यम्" इत्यनेन च बुद्धौ घटादिविषयकनिश्चयात्मकज्ञानरूपव्यापारसम्बन्धः। इत्थं "ममेदं कर्तव्यम्" इति बुद्ध्यभिलापकशब्दे "मम" इत्यनेन पुरुषसम्बन्धः, "इदम्" इत्यनेन विषयसम्बन्धः, "कर्तव्यम्" इत्यनेन च व्यापारसम्बन्धः बुद्धावभिलाप्यते इति सम्बन्धत्रयरूपांशत्रयवती बुद्धिः। तत्र यथा बुद्ध्या सह चेतनपुरुषस्य न वास्तविकः सम्बन्धः, तथा तदीयज्ञानरूपपरिणामेन सह अपि दर्पणस्थमालिन्येन मुखस्य इव अवास्तविकः एव सम्बन्धः। तदिदं वृत्तिज्ञानमेव उपलब्धिनाम्ना आचक्षते - "चेतनः अहं करोमि" इत्येव बुद्धौ आरोपितस्य चेतनपुरुषस्य तदीयपरिणामरूपवृत्तिज्ञानेन सह "इदं जानामि" इत्येवं प्रतीयमानः यः अवास्तविकः सम्बन्धः, तच्छालिवृत्तिज्ञानस्य एव उपलब्धिविषयत्वात्। एवं वृत्तिज्ञानम् इव सुखदुःखेच्छाद्वेषधर्माधर्मसंस्कारा अपि बुद्धेरेव धर्माः, "सुखी अहं करोमि, दुःखी अहं करोमि" इत्येवं सुखदुःखादिधर्माणां प्रयत्नरूपकृत्या सह सामानाधिकरण्यप्रतीतेः, धर्मिणः अभेदं विना च धर्माणां



सामानाधिकरण्यस्य अप्रतीतेः। ततश्च यथा प्रयत्नरूपा कृतिः बुद्धेः धर्मस्तथा सुखदुःखादयः अपि बुद्धेरेव धर्मा इति मन्तव्यम्।

ननु यथा कृत्या सह सामानाधिकरण्यात् सुखदुःखादयः बुद्धेः धर्माः मन्यन्ते, तथा "चेतनोऽहं करोमि" इत्येवं चेतनताधर्मस्यापि कृत्या सह सामानाधिकरण्यप्रतीतेः चेतनताधर्मः अपि बुद्धेः एव मन्तव्य इति चेत्, न। बुद्धेः परिणामित्वेन चेतनत्वानुपपत्तेः, परिणामिवस्तूनाम् अपि चेतनत्वाभ्युपगमे तु मृदादीनाम् अपि तथात्वापत्तेः। ततश्च इदम् अनुमानं सिद्ध्यति - "बुद्धिर्न चेतना, परिणामित्वात्, मृद्वत्" इति। "चेतनोऽहं करोमि" इत्यनुभवस्तु "लोहितः स्फटिकः" इतिवत् चेतनतांशे भ्रान्तिरूप एव।

## २.७) प्रधानमेव जगतः कर्तृ

पुरुषस्य असङ्गत्वात् निर्विकारत्वात् जगतः कर्तृत्वं न सम्भवति, सांख्यसिद्धान्ते पुरुषे कर्तृत्वानङ्गीकारात्। किञ्च, पुरुषाद् भिन्नः कश्चित् ईश्वरः अपि सांख्यनये नास्ति यः जगतः कर्ता स्यात्। कर्तारं विना न कस्यचित् कार्यस्य उत्पत्तिः इति कार्यरूपजगतः कश्चित् कर्ता अवश्यम् अङ्गीकर्तव्यः। स च जगत्कर्ता सांख्यसिद्धान्ते कः इति चेत् अत्रोच्यते - स्वतन्त्रम् उत्पत्तिविनाशरहितं नित्यम् एकम् अचेतनं प्रधानम् एव जगतः कर्तृ इति। कर्तृत्वं नाम कार्यानुकूलकृतिमत्त्वम्, तादृशं कर्तृत्वं न प्रधाने न तिष्ठति, अपि तु बुद्धौ एव तिष्ठति। कथं तर्हि प्रधानस्य कर्तृत्वम् उच्यते इति चेत् कर्तृरूपबुद्धेः उपादानकारणत्वं प्रधाने अस्ति इति कारणात् प्रधाने कर्तृत्वम् अस्ति इति स्वीक्रियते। तथाहि - घटरूपकार्यानुकूलकृतिमत्त्वरूपं कर्तृत्वम् यथा कुलाले तथा जगद्रूपकार्यानुकूलकृतिमत्त्वम् कर्तृत्वं तु बुद्धौ एव, न प्रधाने इति सिद्ध्यति। अपि च "यादृशं कार्यं तस्य कारणमपि तादृशमेव भवति" इति अस्ति अव्यभिचरितः नियमः। इदं जगत् हि त्रिगुणात्मकम्, अतः अस्य कारणेन अपि त्रिगुणात्मकेन भाव्यम् इत्यतः कारणात् अपि सिद्ध्यति यत् प्रधानमेव जगतः कर्तृ, तस्य एव त्रिगुणात्मकर्तृत्वात्। तथा च प्रयोगः "इदं कार्यरूपं जगत् सुखदुःखमोहात्मककारणकम्, सुखदुःखमोहान्वितत्वात्, यद् येन अन्वितं भवति तत् तत्कारणकम्, यथा सुवर्णालङ्कारः सुवर्णान्वितत्वेन सुवर्णकारणकः, तथा च इदं तस्मात् तथा" इति।

## २.८) परार्था प्रकृतेः प्रवृत्तिः

यावती प्रवृत्तिः सा सर्वा स्वार्थतः परार्थतः वा दृष्टिपथम् अवतरति। प्रकृतिस्तु जडा इति न तस्याः स्वार्थतः परार्थतो वा प्रवृत्तिः उपपद्यते इति चेन्न, परार्था एव प्रकृतेः प्रवृत्तिः। दृश्यते हि लोके अचेतनमपि प्रयोजनं प्रति प्रवर्तते। यथा - वत्सविवृद्ध्यर्थं क्षीरम् अचेतनं प्रवर्तते, एवम् अचेतना प्रकृतिरपि पुरुषविमोक्षणाय प्रवर्तयिष्यते। तथाहि उच्यते ईश्वरकृष्णेन -

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य।।** इति। [सांख्यकारिका ५७]



अस्यार्थः - यथा अज्ञस्य अचेतनस्य क्षीरस्य दुग्धस्य वत्सविवृद्धिनिमित्तं गोशिशुपोषणकृते प्रवृत्तिः स्वयमेव प्रस्रवणं भवति, तथा अचेतनस्य प्रधानस्य पुरुषविमोक्षनिमित्तं प्रवृत्तिः सङ्गच्छते इति।

न केवलं परार्था एव प्रकृतेः प्रवृत्तिः स्वार्था अपि तस्य प्रवृत्तिः विद्यते। तथाहि लोके यथा इच्छानिवृत्त्यर्थं प्रवृत्तिः दृश्यते तद्वत् प्रधानं पुरुषस्य विमोक्षार्थं प्रवर्तते इति। तथाहि उच्यते -

**औत्सुक्यविनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।**

**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्।।** इति। [सांख्यकारिका ५८]

अत्र औत्सुक्यपदस्यार्थः इच्छा, सा हि गुणत्रयपर्याप्तवृत्तिः, न तु न्यायाभिमतं चेतनधर्मत्वम्। सा हि इच्छा इष्यमाणप्राप्तौ निवर्तते। यदा कस्यचित् पुरुषस्य इष्टवस्तुनः प्राप्तिकरणेच्छा भवति तदा तस्य वस्तुनः प्राप्तये गमनागमनादिरूपक्रियासु स प्रवृत्तो भवति, यदा च तद् वस्तु प्राप्तं भवति तदा स ततो निवृत्तो भवति। ननु किमत्र इष्टमाणं वस्तु इति चेत् पुरुषस्य विमोक्षः एव प्रकृतेः इष्टः। अनेन परार्था एव प्रधानस्य प्रवृत्तिरिति ज्ञायते, फलस्य परगतत्वात्, तस्यैव च स्वार्थतुल्यत्वादिति भावः।

एवं प्रकृतिपुरुषविवेकज्ञानेन यदा पुरुषस्य यदा मोक्षः भवति तदा प्रकृतिः स्वयं निवर्तते। तथाहि उच्यते -

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**

**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः।।** [सांख्यकारिका ५९] इति।

यथा नर्तकी नाट्यशालास्थान् पुरुषान् प्रति नृत्यं दर्शयित्वा नृत्यात् निवर्तते। तथा प्रकृतिः पुरुषं प्रति आत्मानं दर्शयित्वा निवृत्ता भवति।

## २.९) ईश्वरः

सांख्यमते ईश्वरः सद्भावविषये अस्ति विदुषां महती विप्रतिपत्तिः। तथाहि प्रसिद्धं पद्यं -

**सांख्याः निरीश्वराः केचित् केचिदीश्वरदेवताः।**

**सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः।।** इति।

तत्र ईश्वरस्वीकारविषये अस्वीकारविषये च युक्तितः विराजते। "**ईश्वरासिद्धेः**" (सांख्यसूत्रम् १.९२) इति "**नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः**" (५.२) इत्यारभ्य "**सम्बन्धाभावान्नानुमानम्**" (५.११) इत्यन्तं सूत्रजातं विलोक्य अनेके मन्यन्ते यत् निरीश्वराः सांख्या इति। केषाञ्चिन्मते सूत्रकृता प्रणीतं सांख्यदर्शनं तु नास्ति निरीश्वरम्। तेषां मते अधिष्ठाता सर्वविद् सर्वकर्ता ईश्वरः इत्यादिपदैः परमात्मनः निर्देशः विद्यते। तथाहि सूत्रजातम् - "**तत्सन्निधानादधिष्ठातृत्वं मणिवत्**" (१.९६) इति, "**स हि सर्ववित् सर्वकर्ता**" (३.५६) "**नेश्वराधिष्ठिते फलसम्पत्तिः कर्मणा तत्सिद्धेः**" (५.२) इत्यादयः। वस्तुतस्तु सांख्यदर्शनं जडां प्रकृतिमेव जडस्य जगतः उपादानं कारणं मनुते, न तु चेतनं पुरुषम्। किन्तु तस्य जगतः अधिष्ठाता नियन्ता वा पुरुषः इति स्वीक्रियते एव। स एव पुरुषः ईश्वरः स्यात्, न तु तत्त्वान्तरं किञ्चित् इति सांख्यानां मतम्। एतादृशः पुरषः न वेदान्ताभिमतः ईश्वरः। जडस्य जगतः उपादानं कारणं ये चेतनम् इति स्वीकुर्वन्ति तैरपि तत् साधयितुं चेतनातिरिक्तम् अनिर्वचनीयं मायाख्यं तत्त्वान्तरं पृथक् कल्प्यते इव। सांख्यास्तु जगदुपादानत्वेन चेतनं पुरुषं



नाङ्गीकुर्वन्ति, अपि तु जडां प्रकृतिम् अङ्गीकुर्वन्ति इति नास्ति किञ्चिद् असमञ्जसम्। सांख्यकारिकायां तु ईश्वरविषये किमपि नोक्तम्।



## पाठगतप्रश्नाः-३

१६. बुद्धेर्जडत्वे कर्तृत्वं कथं सम्भवति।

१७. सांख्यसिद्धान्ते जगत्कर्ता कः।

१८. कर्तृत्वं नाम किम्।

१९. अचेतनस्य प्रवृत्तेः कः दृष्टान्तः।

२०. षडास्तिकदर्शनेषु निरीश्वरत्वेन के प्रसिद्धाः।

क) नैयायिकाः  ख) वैशेषिकाः  ग) सांख्याः  घ) वेदान्तिनः



## पाठसारः -

पुरुषः प्रकृतिश्चेति तत्त्वयोर्मध्ये पुरुषसम्बन्धिनः बहवः विचाराः पूर्वपाठे आलोचितः। अस्मिन् पाठे पुरुषबहुत्वम् आलोचितम्। तत्र पुरुषाणां बहुत्वस्वीकारे त्रयः हेतवः निगदिताः - जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेः त्रैगुण्यविपर्ययाच्चेति। ततः प्रकृतितत्त्वं विस्तरेण आलोचितम्। प्रकृतिर्हि सत्त्वरजस्तमसां साम्यावस्थारूपा। एते गुणाः न प्रकृतेः धर्माः, किन्तु प्रकृतिस्वरूपा एव। लघुत्वं प्रकाशकत्वं च सत्त्वगुणस्य धर्मः, अवष्टम्भकत्वं चलत्वं च रजसो धर्मः, गुरुत्वम् आवरकत्वं च तमसो धर्मः। यथा प्रदीपस्य प्रकाशः अग्नि-तैल-वर्तिनां परस्परमेलनेन सम्भवति, तथैव एते गुणाः परस्परं मिलित्वा एव कार्यं कुर्वन्ति, न तु एकैकः। प्रकृतिः जडापि चेतनपुरुषसान्निध्यात् चेतनमिव आचरति। तेन कर्तृत्वं प्रकृतिविकारभूतायाः बुद्धेरेव, न तु पुरुषस्य। सा च प्रकृतिः न स्वार्थाय प्रवर्तते, अपि तु परार्थायैव। कः स परार्थः इति चेत् पुरुषस्य मोक्षः। एवं पुरुषस्य मोक्षं सम्पाद्य प्रकृतिः स्वयं स्वप्रवृत्तेः विरमति। अस्मिन् मते नास्ति ईश्वरस्वीकारस्य प्रयोजनम्।



## पाठान्तप्रश्नाः

१. पुरुषबहुत्वसाधकाः हेतवः विस्तरेण विचार्यन्ताम्।

२. मूलप्रकृतिविषये लघुटिप्पणी लेख्या।

३. गुणत्रयस्य स्वरूपं प्रयोजनं च विस्तरेण प्रतिपाद्यताम्।



४. प्रकृतेः प्रवृत्तिः किमर्था इति विचार्यताम्।

५. सांख्यमते पुरुषस्य अकर्तृत्वं बुद्धेश्च जडत्वं कथमिति विचार्यताम्।

६. सांख्यमते ईश्वरः स्वीक्रियते न वेति विचार्यताम्।

७. मूलप्रकृतिस्वीकारे किं मानमिति संक्षेपेण लिख्यताम्।



## पाठगतप्रश्नानाम् उत्तराणि -

१. अणुपरिमाणं महत्परिमाणं मरममहत्परिमाणम् चेति।

२. घ) सांख्याः।

३. क) त्रयः।

४. जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।। इति।

५. 'जन्मादिव्यवस्थातः पुरुषबहुत्वम्' इति।

६. मूलप्रकृतिर्हि सत्त्वरजस्तमोगुणानां साम्यावस्थारूपा।

७. घ) अष्टौ कारणानि – १. अतिदूरात्, २. सामीप्यात् ३. इन्द्रियघातात् ४. मनोऽनवस्थानात्, ५. सौक्ष्म्यात् ६. व्यवधानात् ७. अभिभवात् ८. समानाभिहारात् चेति।

८. ख) सौक्ष्म्यात्।

९. सत्त्वं पुरुषः न इति, पुरुषः न सत्त्वम् इति वा अन्योन्याभावप्रतीतिः एव सत्त्वपुरुषान्यथाख्यातिः।

१०. "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इति।

११. अविवेकिता नाम सम्भूयकारिता।

१२. अनेकैः पुरुषैः गृह्यते इति कारणात् प्रधानं सामान्यम्।

१३. प्रीत्यप्रीतिविषादात्मकाः त्रयो गुणाः।

१४. क) सत्त्वस्य।

१५. सत्त्वस्य प्रकाशः, रजसः प्रवृत्तिः, तमसः नियमनम्।

१६. बुद्धौ चेतनपुरुषप्रतिबिम्बात्।

१७. प्रधानमेव जगत्कर्तृ।

१८. कार्यानुकूलकृतिमत्त्वम्।

१९. यथा अचेतनं क्षीरं वत्सवृद्ध्यर्थं प्रवर्तते इति दृष्टान्तः।

२०. ग) सांख्याः।

॥ इति द्वितीयः पाठः ॥



३

# सांख्यदर्शने सृष्टिविचारः

## प्रस्तावना

कुतः अस्य विचित्ररचनात्मकस्य जगतः समुत्पत्तिः। कोऽयं जीवः। इत्येवं जिज्ञासा एव अध्यात्मवादस्य बीजम्। तथाहि आम्नायते ऋग्वेदीये नासदीयसूक्ते -

**को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।**
**अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव।।** इति।

व्याचिख्यासितस्यास्य विषयस्य चर्चार्थं दर्शनप्रस्थानानां प्रस्तावः समभूत्। वस्तुतस्तु समेषामेव दर्शनानां सृष्टिविषये भिन्नानि मतानि सन्ति। यथा अद्वैतवेदान्तमते अज्ञानमेव प्रपञ्चसृष्टेः कारणम्, न्यायवैशेषिकमते तु नित्याः परमाणवः अदृष्टवशात् द्व्यणुकादिक्रमेण जगत् सृजन्ति। इत्थं सांख्यदर्शनस्यापि सृष्टिविषये स्वमतं विद्यते। सांख्यमते प्रकृतिपुरुषसंयोगात् प्रकृतेः गुणवैषम्यं जायते, ततः महत्तत्त्वादिक्रमेण प्रपञ्चस्य सृष्टिः भवति। अस्मिन् पाठे सांख्यनये सृष्टितत्त्वं विचारयिष्यते, समञ्च सृष्टानां पदार्थानां विषये यथाविस्तरम् आलोचयिष्यते।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- सांख्यदर्शनस्य सृष्टितत्त्वविषये परिचयः लभ्यते।
- सांख्यदर्शने सृष्टानां पदार्थानां परिचयः लभ्यते।
- सृष्टेः कारणं किमिति ज्ञायते।
- सृष्टेः प्रयोजनं किमिति ज्ञायते।
- सांख्यसम्मतः सृष्टिक्रमः ज्ञायते।
- व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्ये संक्षेपेण ज्ञायेते।

## ३.१) त्रिगुणपरिणामः सृष्टेः कारणम्

प्रकृतिः पुरुषः चेति मूलं तत्त्वद्वयं सांख्यसिद्धान्ते स्वीक्रियते। एतयोः सद्भावे मानमपि प्रागेव प्रतिपादितम्। इदानीं मूलप्रकृतेः कथं प्रपञ्चस्य सृष्टिः भवतीति प्रतिपाद्यते। तत्र साम्यावस्था वैषम्यावस्था चेति दशाद्वयं प्रधानस्य। गुणत्रयस्य सामावस्था यदा तिष्ठति तदा स प्रलयकालः इत्युच्यते। सृष्टिकाले च गुणत्रयस्य वैषम्यं जायते। सांख्यनये वस्तुतः गुणानां वैषम्यमेव सृष्टेः बीजम्। एकमेव मेघोदकं यथा नारिकेलाद्याधारवैविध्यात् तद्गतं सन्मधुरादिरसवैचित्र्यं रचयति, तद्वदेका प्रकृतिरपि गुणवैषम्यतारतम्यात् विचित्रकार्यरचनां सम्पादयतीति तेषां मतम्। तदुक्तं -

**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च।**

**परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात्।**। इति। [सांख्यकारिका -१६]

श्लोकार्थः - त्रिगुणतः सत्त्वादिगुणत्रयात्, प्रवर्तते प्रवृत्तं भवति, तथा समुदयात् परस्परसंमिश्रणात् प्रवर्तते, तथा च प्रधानस्य द्विधा प्रवृत्तिर्भवति- सृष्टिकालीना, प्रलयकालीना च। तत्र सृष्टिकाले प्रकृतेः त्रयो गुणाः मिलित्वा प्रवर्तन्ते, ते च तस्मिन् समये केचन गुणभूताः केचिच्च प्रधानभूताः भवन्ति, गौणमुख्यभावम् अन्तरेण अनेकपदार्थानां मिलित्वा प्रवृत्तेः असम्भवात्। प्रलयकाले च प्रधानस्य त्रयो गुणाः परस्परतः पृथग्भूताः स्वातन्त्र्येण अन्योन्यगुणप्रधानभावम् अनपेक्ष्य स्वस्वरूपतः एव प्रवृत्ताः भवन्ति, स्वरूपमात्रेण अवतिष्ठन्ते इत्यर्थः। एकस्माद् अव्यक्ताद् विचित्रकार्याणाम् उत्पत्तिमाह - प्रतिप्रतिगुणाश्रयविशेषात् इति, एकैकगुणस्य भिन्नभिन्नमात्राणां सम्मेलनाद् एकस्मादेव प्रधानाद् नानाकार्योत्पत्तिः इत्यर्थः। तत्र दृष्टान्तः - परिणामतः सलिलवत् इति। यथा सलिलम् एकमपि नारिकेल-जम्बीरादिपरिणामभेदात् मधुरतिक्तादिभावं प्रतिपद्यते, तद्वत् प्रधानमपि सहकारिभेदादेव विषमभावं प्रतिपद्यते इत्यर्थः।

परिणामस्वभावाः हि गुणाः। अतः ते परिणतिशीलताम् अप्राप्य क्षणमपि न अवतिष्ठन्ते। प्रकृतेः द्विधा परिणामः - सदृशपरिणामः विसदृशपरिणामश्च। प्रलयकाले सत्त्वादयः गुणाः सदृशपरिणामम् आप्नुवन्ति। तदा सत्त्वं स्वस्य लघुत्वादिरूपम् आदायैव प्रवर्तते, न तु केनचिदपि अन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमते। रजोऽपि स्वस्य उपष्टम्भकत्वादिरूपम् आदायैव प्रवर्तते, तमोऽपि गुरुत्वादिरूपस्वानुरूपपरिणामेनैव प्रवर्तते, न केनचिदन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमते इत्यर्थः। सृष्टिकाले च प्रकृतेः गुणानां साम्यावस्थाप्रच्युतिरूपः विसदृशपरिणामः भवति। तदा गुणाः परस्परं गौणमुख्यभावेन संमिश्रणेन महत्तत्त्वादिरूपेण परिणमन्ते।

## ३.२) प्रधानपुरुषसंयोगसिद्धिः

सांख्यनये पुरुषः हि द्रष्टा अकर्ता चेतनश्च। न स सृष्टेः कारणम्। सृष्टिकारणं तु अचेतनं प्रधानमेव। ननु अचेतनस्य सृष्टिकर्तृत्वं नैव सङ्गच्छते, न हि कश्चित् अचेतनः पदार्थः किञ्चित् सृज्यमानः दृश्यते लोके। अतः अनुपपन्नम् अचेतनस्य प्रधानस्य सृष्टिकर्तृत्वम् इति चेन्न, अचेतनमपि प्रधानम् पुरुषसान्निध्यात् चेतनमिव भवति। पुरुषप्रतिबिम्वः यदा प्रकृतौ आपपति तदा जडापि प्रकृतिः चेतनमिव



आरचति। अयस्कान्तमणिसान्निध्यात् यथा अचेतनस्यापि अयसः प्रवृत्तिरवलोक्यते तद्वत् उदासीनपुरुषसान्निध्याद् अपि अचेतनायां प्रकृतौ प्रवृत्तिरूपा क्रिया उत्पद्यते। एवं पुरुषसान्निध्यात् प्रकृतौ कर्तृत्वम् समागच्छति, किन्तु तस्याः चेतनत्वं तु नास्ति। पुरुषे च चेतनत्वं वर्तते परन्तु क्रियाशक्तिर्नास्ति इति कारणात् न पुरुषस्य कर्तृत्वम्। एवं चैतन्यं पुरुषस्य, कर्तृत्वं च प्रधानस्य इति चैतन्यकर्तृत्वे भिन्नाधिकरणस्थे इति सिद्ध्यति। तथाहि उच्यते सांख्यकारिकायाम् -

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।**
**गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः।।** इति। [सांख्यकारिका -२०]

अयमर्थः - चैतन्यं कर्तृत्वं च भिन्नाधिकरणे युक्तितः सिद्धे इति कारणात्, तत्संयोगात् चेतनसंयोगात्, लिङ्गम् बुद्ध्यादिकम् अचेतनम् अपि चेतनावत् चेतनम् इव भवति। तथा गुणकर्तृत्वे अपि बुद्ध्यादिरूपेण परिणतानां गुणानां कृतिमत्त्वे अपि, तथा बुद्ध्युपरागात् बुद्धौ प्रतिबिम्बितत्वात् उदासीनः अपि पुरुषः कर्ता इव भवति, न तु वस्तुतः कर्ता भवति। भ्रान्त्या च पुरुषः कर्ता आत्मानं मन्यते। तेन च "करोमि" इति भ्रान्तप्रत्ययः उपपद्यते। भ्रान्तिकारणं हि पुरुषसन्निधानम्, प्रकृतिपुरुषसंयोगः इत्यर्थः। ननु "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतेः चेतनस्य असङ्गत्वात् कथं तत्संयोगः इति चेदुच्यते - पुरुषस्य यत्कर्तृत्वं तद् बुद्ध्युपरागात्, बुद्धेश्च या चेतनता सा पुरुषसान्निध्यात्। अत्र संयोगपदेन न भूतलघटयोर्यथा संयोगः तद्वत् न ज्ञेयः, अपि तु बिम्वप्रतिबिम्बत्वेन ज्ञेयः। यथा जलसूर्ययोः संयोगात् परस्परधर्मारोपः तथैव बुद्धिपुरुषयोः इति भावः। तथाहि कापिलसूत्रम् - **"उपरागात् कर्तृत्वं चित्सान्निध्यात्"** (१.१६४) इति। इत्थं पुरुषसान्निध्यात् प्रकृतेः गुणत्रयस्य साम्यावस्थायाः प्रच्युतिरूपा सृष्टिः उपपद्यते। इदमत्र ध्येयम् यत् प्रकृतिपुरुषसंयोगो हि सृष्टेः निमित्तकारणम्, सृष्टेः उपादानकारणं तु प्रकृतिरेव।

## ३.३) सृष्टेः प्रयोजनम्

अद्वैतवेदान्तिनां मते नास्ति सृष्टेः किञ्चिद् प्रयोजनम्, लीलारूपा एवेयं जगत्सृष्टिः परमेश्वरस्य इति यथा तद्वत् अस्ति वा किञ्चित् प्रयोजनं सृष्टेः इति चेदुच्यते पुरुषस्य मोक्षः प्रधानस्य च भोगः सृष्टेः प्रयोजनम्। तथाह्युच्यते सांख्यकारिकाकारेण -

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः।।** इति। [सांख्यकारिका - २१]

उभयोः पुरुषस्य प्रधानस्य च यः संयोगः, स दर्शनार्थं कैवल्यार्थं च इति अन्वयः। तत्र प्रधानेन स्वस्य दर्शनार्थं सुखदुःखाद्यात्मक-स्वस्वरूपानुभवरूपभोगार्थं पुरुषः अपेक्ष्यते, पुरुषेण च स्वकैवल्यार्थम् कैवल्यकारण-विवेकज्ञानार्थं प्रधानम् अपेक्ष्यते। अत्र दृष्टान्तः - पङ्ग्वन्धवदिति। यथा एकः पङ्गुः एकश्च अन्धः मार्गे गच्छन्तौ केनचित् कारणेन स्वबन्धुपरित्यक्तौ दैवात् संयोगम् उपयातौ। पङ्गुः द्रष्टुं शक्नोति, परन्तु गन्तुं न शक्नोति, अन्धश्च गन्तुं शक्नोति, परन्तु द्रष्टुं न शक्नोति। तदा अन्धः पङ्गुं स्वस्कन्धम् आरोप्य स्वशरीरारूढेन पङ्गुदर्शितेन च मार्गेण गच्छन् ईप्सितस्थानं प्राप्नोति। एवं पुरुषे दर्शनशक्तिरस्ति



पङ्गुवत् न क्रिया, प्रधाने क्रियाशक्तिरस्ति अन्धवत् न दर्शनशक्तिः। तथा च यथा गतिशक्तिविहीनेन पङ्गुना अभीष्टदेशप्राप्तये गतिशक्तिमान् अन्धः अपेक्ष्यते, दर्शनशक्तिहीनेन चान्धने मार्गप्रदर्शनाय दर्शनशक्तिमान् पङ्गुः अपेक्ष्यते, तथेति दृष्टान्तार्थः। अत्र पङ्गूपमो निष्क्रियः पुरुषः, अन्धोपमं च अचेतनं प्रधानमिति बोध्यम्। यथा वा ईप्सितस्थानप्राप्तौ अनयोः पङ्ग्वन्धयोः कृतार्थयोः विभागो भविष्यति, एवं प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते, पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति, तयोः कृतार्थयोः विभागो भविष्यति।



## पाठगतप्रश्नाः-१

१. प्रधानस्य दशाद्वयं किम्।

२. कदा गुणत्रयवैषम्यं जायते।

३. गुणत्रयवैषम्यं किमर्थं जायते।

४. एकमेव प्रधानं विचित्रकार्यरचनां सम्पादयति इत्यत्र सांख्यकारिका का।

५. प्रलयकाले गुणानां कीदृशः परिणामः भवति।

६. सांख्यमते सृष्टिप्रयोजनं किम्।

७. प्रकृतिपुरुषसंयोगात् सृष्टिः इत्यत्र कयोः दृष्टान्तः कारिकायां प्रदत्तः।

८. पुरुषसान्निध्यात् बुद्धेः कर्तृत्वमित्यत्र कापिलसूत्रं किम्।

## ३.४) सृष्टिक्रमः -

अस्तु तावत् पङ्ग्वन्धवत् प्रकृतिपुरुषयोः संयोगः। किम् तेन सिध्यति इति चेत् उच्यते - 'तत्कृतः सर्गः' इति। प्रकृतिपुरुषसंयोगात् हि सृष्टिर्भवति। तत्र उपादानकारणं तावत् प्रकृतिरेव। तथाहि उच्यते सृष्टिक्रमः -

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।**

**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि।।** इति। [सांख्यकारिका २२]

प्रधानात् महत्तत्त्वम् अर्थात् बुद्धिः जायते, महत्तत्त्वात् अहङ्कारः उत्पद्यते, तस्मात् अहङ्कारात् षोडशकः गणः जायते। कः स षोडशकः गणः इति चेत् एकादशेन्द्रियाणि पञ्च तन्मात्राणि चेति षोडशको गणः। तस्मादपि षोडशकात् गणात् पञ्चभ्यः पञ्चतन्मात्रेभ्यः पञ्च भूतानि पञ्चमहाभूतानि आकाशादीनि जायन्ते इति कारिकार्थः।

प्रकृतिः



महत्



▼
अहङ्कारः
▼
मनः चक्षुः श्रोत्रं जिह्वा नासिका त्वक् वाक् पाणिः पादः पायुः उपस्थः
शब्दः स्पर्शः रूपं रसः गन्धः (षोडशकः गणः)
↓ ↓ ↓ ↓ ↓
आकाशः वायुः तेजः जलम् पृथिवी

तत्र शब्दतन्मात्राद् आकाशं शब्दगुणं जायते, शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद् वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात् तेजः शब्दस्पर्शरूपगुणं, शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्राद् आपः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहितात् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायते।

पञ्चविंशतितत्त्वमध्ये पुरुषः प्रकृतिश्च न कुतश्चित् सृज्यते। तयोः स्वरूपमपि प्राग् विस्तरेण निगदितम्। इदानीं प्रकृतितः यानि तत्त्वानि सृष्टानि तेषां विषये क्रमेण आलोचनं करिष्यते।

## ३.५) महत्तत्त्वम् -

प्रकृतेः सात्त्विकांशाद् यत्तत्त्वं प्रथमम् उत्पद्यते तदेव महत्तत्त्वम् इत्युच्यते। अस्यैव नामान्तरं बुद्धितत्त्वमिति। सत्त्वगुणस्य प्राधान्याद् अत्र लघुत्वं प्रकाशश्च विद्येते। तथाहि उच्यते सांख्यकारिकायाम् -

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।**
**सात्त्विकमेतद् रूपं तामसमस्माद्विपर्यस्तम्।**। इति। [२३]

"मयेदं कर्तव्यम्" इत्याकारनिश्चयो हि अध्यवसायः। विषयमधिकृत्य अवसायः निश्चयः इति अध्यवसायः। अध्यवसायात्मिका हि बुद्धिः इति बुद्धेर्लक्षणम्। तथाहि सांख्यसूत्रम् - **"अध्यवसायो बुद्धिः"** (२.१३) इति। लोके सामान्यः जनः यदा कस्मिंश्चित् कर्मणि प्रवृत्तो भवति तदा तस्य अन्तःकरणे तिस्रः वृत्तयः भवन्ति- यथा प्राग् आलोचनम् (वस्तुनो ज्ञानम्), ततः "अहम् अत्राधिकारी अस्मि" इति अभिमानः, ततः "मयेदं कर्तव्यम्" इति अध्यवसायः (निश्चयज्ञानम्) इति। एतासु तृतीया वृत्तिः यत्र निश्चयात्मकं ज्ञानं भवति सैव बुद्धिः। तत्र बुद्धौ चत्वारः सात्त्विकाः धर्माः, चत्वारः तामसाश्च धर्माः विद्यन्ते। तत्र धर्मः, ज्ञानं, विरागः, ऐश्वर्यं चेति चत्वारः सात्त्विकधर्माः, तद्विपरीताः च अधर्मः, अज्ञानम्, अविरागः, अनैश्वर्यमिति चत्वारः तामसाः धर्माः।

ननु अचेतनायाः बुद्धेः कथं लोकवन्निश्चयः सम्भवतीति चेदुच्यते चैतन्यपुरुषसन्निधानात् इति। चिन्मात्रस्य पुरुषस्य बुद्धिरूपान्तःकरणवर्तित्वादिति भावः। यथा एकत्र उपस्थितयोः स्फटिकजपाकुसुमयोः स्फटिकं जपाकुसुमलौहित्यम् आपद्यते, तथा चित्सन्निधानाद् बुद्धिरपि चैतन्यम् आपन्ना लोकवन्निश्चयं करोतीति उपपद्यते।

## ३.६) अहङ्कारः -

महत्तत्त्वाज्जायते अहङ्काराख्यं तत्त्वम्। किम् तस्य लक्षणमिति चेदुच्यते सांख्यकारिकायाम् -



**अभिमानोऽहङ्कारः तस्माद् द्विविधः प्रवर्तते सर्गः।**

**एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव।।** इति। [२४]

अभिमानो हि अहङ्कारः। "अहमेव अत्र अधिकृतः", "मदर्था इमे विषयाः", "मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति", "अतोऽहमस्मि" इति यः अभिमानः सः असाधारणव्यापारः अहङ्कारः। तमेव अहङ्कारम् उपजीव्य बुद्धिः अध्यवस्यति - "कर्तव्यमेतन्मया" इति। तस्माद् अहङ्काराद् द्विविधः सर्गः प्रवर्तते- क) इन्द्रियाख्यः एकादशकः गणः, ख) तन्मात्रपञ्चकश्च।

एकस्माद् अहङ्काराद् द्विविधः सर्गः प्रवर्तते इत्यत्र कारणं किमिति चेदुच्यते -

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।**

**भूतादेस्तन्मात्रः स तामसः तैजसादुभयम्।।** इति। [सांख्याकारिका-२५]

सत्त्वगुणप्रधानः यः अहङ्कारः स वैकृताहङ्कारः इति नाम्ना प्रसिद्धम्। तस्मात् सत्त्वगुणप्रधानात् वैकृताद् अहङ्कारात् एकादशकः गणः अर्थात् एकादशेन्द्रियाणि उत्पद्यन्ते। तमःप्रधानाद् अहङ्कारात् हि पञ्च तन्मात्राणि जायन्ते। रजोगुणात् तु उभयम् एकादशेन्द्रियाणि, पञ्चतन्मात्राणि च जायन्ते इति श्लोकार्थः।

अहङ्कारे हि त्रयो गुणाः तिष्ठन्ति - सत्त्वं रजस्तमः इति। तत्र यदा सत्त्वगुणेन रजस्तमसोः अभिभवो जायते तदा अहङ्कारस्य वैकृतसंज्ञा भवति। ततः वैकृताद् अहङ्कारात् सत्त्वगुणसाहाय्येन एकादशेन्द्रियाणि उत्पद्यन्ते। तत्रापि उत्कटसत्त्वप्रधानात् मनो जायते, मध्यमसत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि, निकृष्टसत्त्वयुक्ताच्च अहङ्कारात् कर्मेन्द्रियाणि जायन्ते इति बोध्यम्। अत एव इन्द्रियाणि सात्त्विकानि इति उच्यन्ते। यदा च तमोगुणेन सत्त्वरजसोः तिरस्कारो भवति, तदा अहङ्कारस्य भूतादिसंज्ञा भवति, तमोगुणाधिक्याच्च तामस इत्यपि संज्ञा भवति। ततः भूतादेः तामसात् तत्समानस्वभाववन्ति शब्दादिपञ्चतन्मात्राणि उत्पद्यन्ते। एवं यदा रजोगुणेन सत्त्वरजसोः अभिभवो जायते तदा अहङ्कारस्य तैजससंज्ञा भवति। ततः तैजसाद् अहङ्कारात् एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति उभयमुत्पद्यते। यतो यदा वैकृतोऽहङ्कारो विकृतो भूत्वा एकादशेन्द्रियाणि उत्पादयितुं वाञ्छति, तदा स निष्क्रियत्वात् स्वकार्यं कर्तुं न प्रभवति, अतः स क्रियास्वभावस्य तैजसाहङ्कारस्य साहाय्यं गृह्णाति। तथा तामसाहङ्कारोऽपि निष्क्रियत्वात् तन्मात्ररूपं स्वकार्यं नोत्पादयितुं प्रभवतीति सोऽपि तैजसाहङ्कारस्य साहाय्यं गृह्णाति। इत्थं वैकृतादहङ्कारेण भूताद्यहङ्कारेण च तयोः कार्ये सहायकत्वात् तैजसोऽहङ्कारो द्विविधकार्यस्य कारणं भवतीति सिध्यति।

## ३.७) इन्द्रियाणि

पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुरसनाघ्राणाख्यानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि, उभयात्मकं मनश्चेति एकादशेन्द्रियाणि। इन्द्रियत्वं च सात्त्विकाहङ्कारोपादानत्वम्। अहङ्कारकार्यत्वे सति कारणत्वम् इति अन्ये। तत्र इन्द्रस्य प्रत्यगात्मनः लिङ्गम् अनुमापकम् इति इन्द्रियम्। तथा च निरुक्तव्याख्यायां भगवद्दुर्गाचार्यः - "इन्द्रः आत्मा, स येन ईयते लिङ्ग्यते अनुमीयते चास्त्यसावात्मा



कर्ता यस्येदं करणम्, नाकर्तृकं करणमस्तीति तद् इन्द्रियम्" इति। इन्द्रियाणि हि विषयग्राहकत्वेन ज्ञानसाधनानि। तथाहि उच्यते सांख्यकारिकायाम् -

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि।**
**वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः।।** इति। [२६]

## ३.७.१) ज्ञानेन्द्रियाणि -

श्रोत्रचक्षुस्त्वग्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि। तत्र ज्ञानसाधनानि इन्द्रियाणि ज्ञानेन्द्रियाणि। श्रवणादिकार्यद्वारा ज्ञानसाधनत्वात् इन्द्रियाणां तत्पदाभिधेयत्वम्। ज्ञानार्थमिन्द्रियाणीति वा ज्ञानेन्द्रियाणि। तथाहि उच्यते -

**एवं श्रोत्रं त्वचो नेत्रं रसना नासिका तथा।**
**पञ्च बुद्धीन्द्रियाण्याहुः शास्त्रज्ञा हि विचक्षणाः।।** इति।

श्रोत्रादीनां पञ्चानां इन्द्रियाणां पञ्च वृत्तयः सन्ति। तथाहि श्रोत्रस्य कार्यं शब्दश्रवणं, त्वचः स्पर्शग्रहणम्, चक्षुषोः रूपदर्शनं, रसनायाः रसग्रहणम्, घ्राणस्य च गन्धग्रहणम् इति। तत्र वृत्तिः व्यापारः। तथा च अक्षपादसूत्रम् - "**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः**" इति। अत्र वात्स्यायनभाष्यम् - "**पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रमम् अर्थाः विषयाः इति**"।। तथा चोक्तम् -

**शब्दः स्पर्शश्च रूपं च रसो गन्धो ह्यनुक्रमात्।**
**बुद्धीन्द्रियाणां विषयाः समाख्याता महर्षिभिः।।** इति।

## ३.७.२) कर्मेन्द्रियाणि -

वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि। कर्मणाम् क्रियाणाम् साधनभूतानि इन्द्रियाणि कर्मेन्द्रियाणि। वचनादिकार्यद्वारा क्रियानिष्पादकत्वात् इन्द्रियाणां तत्पदवाच्यत्वम्। तथाहि उच्यते -

**हस्तपादं गुदोपस्थं जिह्वेन्द्रियमथापि वा।**
**कर्मेन्द्रियाणि पञ्चैव कथयन्ति विपश्चितः।।** इति।

अत्र पद्ये जिह्वेन्द्रियपदेन मुखम् अर्थात् वागिन्द्रियम् ग्राह्यम्, वागिन्द्रियस्य जिह्वाश्रयत्वात्। एतेषां पञ्च वागादीन्द्रियाणां पञ्च वृत्तयः सन्ति। ताः हि – वाचः वचनम्, हस्तस्य आदानम् ग्रहणमित्यर्थः, पादस्य गमनम्, पायोः विसर्जनम्, उपस्थस्य च आनन्दः इति। तथाहि उक्तम् – "**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्**" इति।

## ३.७.३) ज्ञानकर्मेन्द्रियम्

उभयात्मकं मनः ज्ञानेन्द्रियं कर्मेन्द्रियं च। चक्षुरादीनि ज्ञानेन्द्रियाणि वागादीनि च कर्मेन्द्रियाणि मनोऽधिष्ठितानि सन्ति एव स्वस्वविषयेषु प्रवृत्तानि भवन्ति इति कारणात् मनसः उभयात्मकत्वम्।



ज्ञानकर्मणोः उभयोः साधकमिन्द्रियं ज्ञानकर्मेन्द्रियम्। सर्वेन्द्रियप्रवर्तकत्वादेव मनसः एतत्पदवाच्यता। तथाहि उच्यते -

**मनो बुद्धीन्द्रियं विज्ञैः कर्मेन्द्रियमपि स्मृतम्।**
**मनोऽधिष्ठितमेवेदमिन्द्रियं यत्प्रवर्तते।।** इति।

एवम् एकादशमिन्द्रियं हि मनः।

## ३.८) तन्मात्राणि महाभूतानि च

अहङ्कारात् यः षोडशकः गणः उत्पद्यते, तस्मिन् गणे पञ्च तन्मात्राणि विराजन्ते। तानि हि तन्मात्राणि शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रं चेति। तन्मात्रपदेन पञ्चमहाभूतानां सूक्ष्मत्वावस्थारूपाः गुणाः विवक्षिताः। तथाहि आकाशस्य गुणः शब्दः, वायोः स्पर्शः, तेजसः रूपम्, अपः रसः, पृथिव्याश्च गुणः गन्धः इति। एतेभ्यः शब्दादितन्मात्रेभ्यः एव पञ्च महाभूतानि आकाशादीनि उत्पद्यन्ते। एतेषामेव पञ्चमहाभूतानां परस्परसंमिश्रणेन इदं व्यवहारात्मकं स्थूलं जगत् सृष्टम्।



## पाठगतप्रश्नाः-२

९. षोडशको गणः कस्मादुत्पद्यते।

क) प्रकृतेः ख) महत्तत्त्वात् ग) अहङ्कारात् घ) पुरुषात्

१०. ज्ञानेन्द्रियाणि कानि।

११. कर्मेन्द्रियाणि कानि।

१२. किंस्वरूपा बुद्धिः।

१३. अहङ्कारस्य लक्षणं किम्।

१४. पञ्च तन्मात्राणि कानि।

१५. पञ्च तन्मात्राणि कस्मात् उत्पद्यन्ते।

क)प्रकृतेः ख) महत्तत्त्वात् ग) तमःप्रधानाद् अहङ्कारात् घ) सत्त्वप्रधानात् अहङ्कारात्

१६. एकादशको गणः कस्मात् उत्पद्यते।

क)प्रकृतेः ख) महत्तत्त्वात् ग) तमःप्रधानाद् अहङ्कारात् घ) सत्त्वप्रधानात् अहङ्कारात्



## ३.९) अष्टौ प्रकृतयः -

शब्दादीनि पञ्च तन्मात्राणि, महत्तत्त्वम् [बुद्धिः], मूलप्रकृतिः, अहङ्कारः इति अष्टौ प्रकृतयः। अत्र प्रकृतिपदेन उपादानकारणानि अवगन्तव्यानि। एतेषु मूलप्रकृतिर्हि केवलप्रकृतिः अर्थात् अस्याः नास्ति किञ्चिद् उपादानकारणम्। मूलप्रकृतिर्हि नित्या। अन्यानि सर्वाणि स्वयं यथा उपादानकारणानि तथैव एतेषामपि उपादानकारणानि विद्यन्ते। तथाहि शब्दादीनि पञ्च तन्मात्राणि आकाशादीनां पञ्चमहाभूतानाम् उपादानकारणानि, कार्याणि च अहङ्कारस्य। अहङ्कारश्च पञ्चतन्मात्राणाम् एकादशेन्द्रियाणां चोपादानकारणानि, कार्यञ्च महत्तत्त्वस्य। महत्तत्त्वं च उपादानकारणम् अहङ्कारस्य, कार्यञ्च प्रधानस्य।

## ३.१०) करणानि

महत्तत्त्वम् [बुद्धिः], अहङ्कारः, चक्षुः त्वक् रसनं नासिका श्रोत्रं चेति पञ्च ज्ञानेन्द्रियाणि, वाक् पाणिः पादं पायुः उपस्थं चेति पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः चेति त्रयोदशविधं करणम्। तत्र करणं कारणविशेषः। तत्र "यद्व्यतिरेकेण कार्यानुत्पत्तिस्तत् कारणम्" इति। यथा- दण्डं विना घटस्य अनुत्पत्तिः इत्यतः दण्डः घटस्य कारणम्। क्रियानिष्पत्तौ साक्षादव्यवधानेन साधनं कारकं करणम् इति शाब्दिकाः। यथोक्तं वाक्यपदीये -

**क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम्।।** इति।

क्रियते अनेन इति करणम्। बुद्ध्यादिभिरेव सर्वं ज्ञानजातं कार्यजातं च सम्पाद्यते इति तेषां करणपदाभिधेयता। तस्मात् पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनः, अहङ्कारः, बुद्धिश्चेति त्रयोदश करणानि।

## ३.११) अन्तःकरणत्रयम्

मनो बुद्धिः अहङ्कारः चित्तम् इति अन्तःकरणस्य वृत्तिचतुष्टयम्। तत्र सङ्कल्पविकल्पाकं मनः, निश्चयात्मिका बुद्धिः, अहम्प्रत्ययाभिमानता अहङ्कारः, स्मरणात्मकं चित्तम् इति वेदान्तिनः।

अन्तःकरणं त्रिविधम् - मनोबुद्ध्यहङ्कारभेदात्। तत्र मन आदीनां त्रयाणाम् अपि शरीराभ्यन्तरवृत्तित्वाद् अन्तःकरणम् इति अभिख्या। तत्र क्रियन्ते कर्माणि अनेन इति करणम्, करणे ल्युट्। अन्तः शरीरमध्यस्थम् अदृश्यमिति यावत्, करणम् इन्द्रियम् अन्तःकरणम् इति कर्मधारयः। शरीरस्थपदार्थानां सुखादीनां करणम् साधकतमम् इति षष्ठीतत्पुरुषो वा। संकल्पात्मकं मनः, अध्यवसायात्मिका बुद्धिः, अभिमानात्मकः अहङ्कारः इति तेषाम् अन्तःकरणानां लक्षणं प्रतिपादितपूर्वम्।

## ३.१२) पञ्च वायवः -

बुद्ध्यहङ्कारमनसाम् अन्तःकरणत्रयाणां सामान्यवृत्तयः साधारणव्यापारभूताः वा पञ्च वायवः। ते हि प्राणः, अपानः, व्यानः, उदानः, समानश्चेति। तथाहि उच्यते सांख्यकारिकायाम् -

**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च।।** [२९] इति।



ननु किं नाम साधारणव्यापारः इति चेदुच्यते - यथा पञ्जरचालनरूपो व्यापारः संहतानां (मिलितानां) कपोतानां साधारणो व्यापारः, तथा शरीरधारणरूपो यो जीवनाख्यः प्राणनादिव्यापारः, स मिलितानाम् अन्तःकरणानां साधारणो व्यापारः। यथा अनेके पक्षिणः सम्भूय व्यापारिणो भूत्वा एकं पञ्जरं चालयन्ति तथा सम्भूय व्यापारवन्ति अनेकानि अन्तःकरणानि एकं शरीरं चालयन्ति इति भावः। प्राणादिरूपाः पञ्च वायुवत् सञ्चारात् वायवः, न तु प्रसिद्धवायवः। अस्ति तेषां शरीरेषु अवस्थानभेदः। अवस्थानभेदादेव तेषां पञ्चविधत्वम्। तथाहि प्राणः नासाग्रह-हृदय-नाभि-पादाङ्गुष्ठवृत्तिः, अपानः कृकाटिका-पृष्ठपाद-पायूपस्थपार्श्ववृत्तिः, समानः हृन्नाभिसरवसन्धिवृत्तिः, उदानः हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः, व्यानः त्वग्वृत्तिः। तथाह्युच्यते -

**हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।**

**उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः।।** इति।

न केवलं स्थानभेदादेव जीवनवृत्तेः पञ्चविधत्वम्, व्यापारभेदादपि जीवनवृत्तेः पञ्चविधत्वं बोध्यम्। तथाहि - प्राणनात् अन्नाशनादिना शरीरधारणात् प्राणः, मलमूत्रादेः अपनयनात् अधोनयनात् अपानः, समम् अनुरूपं नाडीषु रसानां नयनात् समानः, रसादीनाम् ऊर्ध्वनयनात् उदानः, बलवत्कर्महेतुत्वाच्च व्यानः।

## ३.१३) व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्यविचारः -

पञ्चविंशतितत्त्वानि सविशदमत्र निगदितानि। पञ्चविंशतितत्त्वेषु महत्तत्त्वाद् आरभ्य अवरोहक्रमेण पञ्चभूतानि यावत् त्रयोविंशतितत्त्वानि व्यक्तानि इति उच्यन्ते। प्रधानस्य च अव्यक्तपदेन व्यपदेशः। तस्यैव प्रकृतिः मूलप्रकृतिः कारणम् इति नामान्तरम्। व्यक्तानि सर्वाणि अव्यक्तस्थितानि। अव्यक्तादेव व्यक्तानां तत्त्वानाम् आविर्भावः। तयोश्च व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्ये इदानीमालोच्येते। तत्र व्यक्ताव्यक्तयोः साधर्म्यप्रतिपादिका कारिका हि -

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**

**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्।।** इति। [१०]

व्यक्तं सर्वं तत्त्वं (१) हेतुमद्, (२) अनित्यम्, (३) अव्यापि, (४) सक्रियम्, (५) अनेकम्, (६) आश्रितम्, (७) लिङ्गम्, (८) सावयवं, (९) परतन्त्रम् च। अव्यक्तं हि अहेतुमत्, नित्यम्, सर्वव्यापि, अक्रियम्, एकम्, अनाश्रितम्, अलिङ्गम्, निरवयवम्, स्वतन्त्रं च। इदानीं व्यक्ताव्यक्तयोः वैधर्म्याणि संक्षेपेण विचार्यन्ते।

१. यस्य उत्पत्तिकारणम् अस्ति तत् हेतुमत्। प्रधानादेव हेतोः महत्तत्त्वादिपञ्चभूतपर्यन्तानि त्रयोविंशतिः तत्त्वानि समुत्पन्नानि। तस्मात् तानि हेतुमन्ति। नित्यत्वात् प्रधानस्य तु नास्ति किञ्चित् उत्पत्तिकारणम् इत्यतः तत् अहेतुमत्।

२. व्यक्तं हि अनित्यम्। सांख्यनये नास्ति कस्यचित् पदार्थस्य सम्पूर्णतः ध्वंसः इति कारणात् अनित्यपदस्य तिरोभावः इत्यर्थः। व्यक्तं यस्मात् उत्पत्तिमत् तस्मादेव तस्य अनित्यत्वम्। अकारणवन्नित्यमिति नित्यस्य लक्षणम्। तद्विपरीतत्वाद् व्यक्तम् अनित्यम्। तद्यथा - मृत्पिण्डाद् उत्पन्नो



घटः अनित्यः दृश्यते। एवं महदादि प्रधानाद् उत्पन्नमिति कारणात् तेषाम् अनित्यता। प्रधानस्य तु नास्ति कस्माच्चिदुत्पत्तिः इति तस्य नित्यत्वम्।

३. व्यक्तं च अप्यापि असर्वगतम्। यथा प्रधानपुरुषौ सर्वगतौ, न तथा इदमित्यर्थः। प्रकृतिस्तावत् त्रयोविंशतितत्त्वं महदादि व्याप्नोति, न च महदादीनि प्रकृतिम् इति सिद्धम् अव्यक्तस्य प्रधानस्य सर्वव्यापित्वम्, व्यक्तानां च अव्यापित्वम्।

४. व्यक्तं हि सक्रियम्। यस्मात् संसरणकाले महदादिकार्यं सूक्ष्मशरीरम् आश्रित्य संसरति तस्मात् सक्रियम्। न चात्र क्रियामात्रस्य विवक्षा, तेन परिणामक्रियावत्त्वात् प्रधानस्यापि सक्रियत्वापत्तेः। इह तु परिस्पन्दनादिक्रियाविशेषस्य एवोपदेशः। नास्तिक प्रधाने परिस्पन्दनादिक्रिया इति कारणात् प्रधानं हि अक्रियम् इत्यर्थः।

५. व्यक्तं हि अनेकं बहुविधम्। त्रयोविंशतिसंख्याकत्वेनैव व्यक्तानाम् अनेकत्वं सिद्ध्यति। पुनश्च अनेकत्वकथनं प्रतिपुरुषं बुद्ध्यादीनां भेदम् उपलक्ष्य इति अवधेयम्। अव्यक्ता प्रकृतिस्तु एकैव।

६. यद् यस्माद् उत्पद्यते तत् तदाश्रितम्। तेन बुद्धिः प्रधानाश्रिता, अहङ्कारः बुद्ध्याश्रितः, इन्द्रियाणि तन्मात्राणि च अहङ्काराश्रितानि, पञ्चभूतानि च तन्मात्राश्रितानि। अतः व्यक्तस्य वैशिष्ट्यं तावद् आश्रितत्वम्। कार्यकारणयोः अभेदत्वेऽपि अत्र तयोराश्रयाश्रयिभावः 'इह वने तिलकाः' इति उदाहरणवत् द्रष्टव्यम्। प्रधानं न कस्माच्चित् उत्पन्नम् इति कारणात् तस्य अनाश्रितत्वम्।

७. लिङ्गं तावत् व्यक्तम्। लीनं गमयति इति लिङ्गम् अनुमापकमित्यर्थः। प्रधानस्य लिङ्गम् अनुमापकं हि व्यक्तम्। व्यक्तम् आश्रित्यैव तस्य कारणत्वेन प्रधानम् अनुमीयते। न तु प्रधानस्य कस्यचित् अनुमापकमिति तस्य अलिङ्गत्वम्।

८. व्यक्तं हि सावयवम्, अवयवैः संयुतम् इत्यर्थः। अवयवनम् अवयवः इति व्युत्पत्त्या अवयवो नाम पदार्थद्वयमेलनं, संयोगो वा। महदादीनां व्यक्तानां परस्परसंयोगः सम्भवः, तस्मात् तानि सावयवानि। न च प्रकृतिः संयोगवती। ननु सत्त्वरजस्तमसां संयोगः प्रकृतौ विद्यते इति चेन्न, अप्राप्तिपूर्विका प्राप्तिरेव संयोगः। प्रधाने तु सत्त्वरजस्तमांसि अविच्छेदेन विद्यन्ते इति न तेषाम् अप्राप्तिपूर्विका प्राप्तिरस्ति इति कारणात् न सयोगः। तस्मात् प्रधानस्य न सावयवत्वम्।

९. व्यक्तं हि परतन्त्रम्। यत् यत् कार्यं तत् तत् कारणपरतन्त्रमिति नियमः। एवं कार्यत्वात् व्यक्तं परतन्त्रम्। प्रकृतिस्तु न कस्यचित् कार्यमिति तस्य स्वातन्त्र्यम्।

इत्थं व्यक्ताव्यक्तयोः वैधर्म्याणि संक्षेपेण आलोचितानि। इदानीं तयोः साधर्म्याणि संक्षेपेण आलोच्यन्ते। तथाहि व्यक्ताव्यक्तयोः साधर्म्यप्रतिपादिका कारिका –

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्।।** इति। [११]

(१) त्रिगुणम्, (२) अविवेकि, (३) विषयः, (४) सामान्यम्, (५) अचेतनम्, (६) प्रसवधर्मि - इत्येतानि व्यक्ताव्यक्तयोः साधर्म्याणि।



१. सत्त्वरजस्तमसां साम्यावस्था हि प्रकृतिः, तेन प्रधानं त्रिगुणम्। कारणगुणाः हि कार्ये अनुवर्तन्ते इत्यतः प्रकृतेः उत्पन्नं महदादि व्यक्तमपि त्रिगुणम्। यथा कृष्णतन्तुजः पटः कृष्ण एव भवति तद्वत्।

२. अविवेकित्वं च व्यक्ताव्यक्तयोः धर्मविशेषः। अत्र अविवेकिता नाम सम्भूयकारिता। न हि किञ्चिदेकं पर्याप्तं स्वकार्ये, अपि तु सम्भूय, तत्र न एकस्मात् कस्यचित् केनचित् सम्भवः। अथवा प्रधानं स्वतः न विविच्यते इति कारणात् अविवेकि। महदादीनि तत्त्वानि अपि प्रधानात् न विविच्यन्ते इति कारणात् अविवेकीनि। अमी गुणाः इदं व्यक्तम्, अमी गुणाः इदं च अव्यक्तम् इति विवेकः कर्तुं न शक्यते इति कारणात् व्यक्तादीनि अव्यक्तं च अविवेकि।

३. विषयः इति पदेन न आन्तरं विज्ञानं प्रधानादितत्त्वम् इति स्पष्टीकृतम्, एतेन विषयपदस्य अर्थः बाह्यः ग्राह्यः भोग्यः पदार्थः इति अङ्गीकर्तव्यः। प्रधानं हि सुखदुःखमोहात्मकतया सर्वैः पुरुषैः भोग्यम्। एवं सर्वाणि व्यक्तानि त्रिगुणात्मकत्वेन सुखदुःखमोहात्मकतया सर्वैः पुरुषैः भोग्यानि। तेन च व्यक्ताव्यक्तयोः विषयत्वं सिद्ध्यति।

४. प्रधानं हि सामान्यम् इति उच्यते। अनेकैः पुरुषैः गृह्यते इति कारणात् तत् सामान्यम्। यथा घटपटादिकम् अनेकैः गृह्यते, यथा वा नर्तकीभ्रूलताभङ्गः बहूनां बहूनां प्रत्यक्षगोचरो भवति, तथैव व्यक्ताव्यक्तयोः उभयोः अपि बहुपुरुषग्राह्यत्वं समस्ति, पुरुषबहुत्वात्।

५. अव्यक्तं प्रधानं तथा व्यक्तानि सर्वाणि अपि अचेतनानि। चेतनस्तु केवलः पुरुषः।

६. प्रसवधर्मित्वं व्यक्ताव्यक्तयोः अपरः धर्मः। बुद्धेः अहङ्कारः, ततः इन्द्रियाणि तन्मात्राणि च, तेभ्यः तन्मात्रेभ्यः भूतानि जायन्ते। एवं प्रधानम् अपि बुद्धिं प्रसूते। तेन उभयोः प्रसवधर्मित्वं सिद्ध्यति। प्रसवधर्मित्वस्य अर्थस्तावत् परिणामित्वम् इति।

इत्थं व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्याणि संक्षेपेण निरूपितानि।



## पाठगतप्रश्नाः-३

१७. अहङ्कारस्य उपादानकारणं किम्।

क) प्रकृतिः  ख) महत्  ग) तन्मात्राणि  घ) इन्द्रियाणि

१८. सांख्यनये कति करणानि।

क) दश  ख) एकादश  ग) द्वादश  घ) त्रयोदश

१९. सांख्यनये कति अन्तःकरणानि।

क) त्रीणि  ख) चत्वारि  ग) पञ्च  घ) एकादश

२०. पञ्च वायवः के।

२१. व्यक्ताव्यक्तयोः कति वैधर्म्याणि सांख्यकारिकायां निगदितानि।

क) नव  ख) अष्टौ  ग) पञ्च  घ) एकादश



२२. व्यक्ताव्यक्तयोः साधर्म्याणि कानि।



## पाठसारः -

प्रत्येकं दर्शनानां सृष्टिविषये स्वकीयं मतं विराजते। तत्र सांख्यनये तावत् प्रकृतिपुरुषसंयोगः एव सृष्टिकारणम्। संयोगः नाम अत्र न घटपटादिवत् साक्षात्सम्बन्धः बोद्धव्यः, अपि तु दर्पणप्रतिबिम्बितमुखवत् बिम्बप्रतिबिम्बसम्बन्धः ज्ञेयः। पुरुषसान्निध्यात् प्रकृतौ गुणानां परस्परं वैषम्यं जायते, ततः महत्तत्त्वादिक्रमेण स्थूलभूतान्तं जगत् उत्पद्यते। अस्मिन् मते सृष्टेः अस्ति किञ्चित् उद्देश्यम्। तथाहि परार्था प्रकृतेरियं प्रवृत्तिः प्रकृतेः भोगसाधिका, पुरुषस्य च कैवल्यसाधिका। प्रकृतिपुरुषसंयोगः हि सृष्टेः निमित्तकारणम्, उपादानकारणं तु मूलप्रकृतिरेव। मूलप्रकृतेः अध्यवसायात्मकं महत्तत्त्वम्, ततः अभिमानात्मकः अहङ्कारः, ततः अहङ्कारात् शब्दस्पर्शरूपरसगन्धाः इति पञ्च तन्मात्राणि, सङ्कल्पविकल्पात्मकं मनः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि च उत्पद्यन्ते। पञ्चतन्मात्रेभ्यः पञ्च महाभूतानि जायन्ते। प्राणापानव्यानोदानसमानाः इति पञ्च वायवः बुद्ध्यहङ्कारमनोरूपान्तःकरणत्रयस्य सामान्यव्यापारभूताः। अयमेव सांख्यनये सृष्टिक्रमः। अत्र प्रधानमेव केवलम् अव्यक्तम्, अन्यानि सर्वाणि तज्जातानि तत्त्वानि व्यक्तानि। तयोः व्यक्ताव्यक्तयोः विद्येते तावत् साधर्म्यवैधर्म्ये। तथाहि - त्रिगुणम्, अविवेकि, विषयः, सामान्यम्, अचेतनम्, प्रसवधर्मि - इत्येतानि व्यक्ताव्यक्तयोः साधर्म्याणि। हेतुमद्, अनित्यम्, अव्यापि, सक्रियम्, अनेकम्, आश्रितम्, लिङ्गम्, सावयवं, परतन्त्रं चेति व्यक्ताव्यक्तयोः वैधर्म्याणि।



## पाठान्तप्रश्नाः

२३. त्रिगुणपरिणामः सृष्टेः कारणम् इति विषये लघुटिप्पणीमेकां लिखत।

२४. सांख्यनये सृष्टिक्रमं वर्णयत।

२५. सृष्टेः किं तावत् प्रयोजनम् - इति सांख्यमतमाश्रित्य आलोचयत।

२६. प्रकृतिपुरुषसंयोगात् कथं सृष्टिर्जायते इति विचारयत।

२७. इन्द्रियाणां विस्तरेण परिचयः प्रदीयताम्।

२८. पञ्च वायूनां विषये लघुटिप्पणीं लिखत।

२९. व्यक्ताव्यक्तयोः साधर्म्यविषये लघुटिप्पणीमेकां लिखत।

३०. व्यक्ताव्यक्तयोः वैधर्म्यविषये लघुटिप्पणीमेकां लिखत।

३१. सांख्यनये अहङ्कारस्य परिचयः दीयताम्।

३२. सांख्यनये महत्तत्त्वस्य परिचयः दीयताम्।



## पाठगतप्रश्नानाम् उत्तराणि -



१. साम्यावस्था वैषम्यावस्था चेति दशाद्वयं प्रधानस्य।

२. सृष्टिकाले।

३. पुरुषसन्निधानात् प्रकृतेः गुणत्रयवैषम्यं जायते।

४. कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च। परिणामतः सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात्।।

५. सदृशपरिणामः।

६. पुरुषस्य मोक्षः, भोगश्च प्रकृतेः इति सृष्टेः प्रयोजनं सांख्यनये।

७. पङ्ग्वन्धयोः।

८. "उपरागात् कर्तृत्वं चित्सान्निध्यात्" इति।

९. ग) अहङ्कारात्

१०. पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुरसनाघ्राणाख्यानि।

११. पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि।

१२. अध्यवसायात्मिका बुद्धिः।

१३. अभिमानोऽहङ्कारः इति अहङ्कारस्य लक्षणम्।

१४. शब्दस्पर्शरूपरसगन्धाः पञ्च तन्मात्राणि।

१५. ग) तमःप्रधानाद् अहङ्कारात्।

१६. घ) सत्त्वप्रधानाद् अहङ्कारात्।

१७. ख) महत्।

१८. घ) त्रयोदश।

१९. क) त्रीणि।

२०. प्राणः, अपानः, व्यानः, उदानः, समानश्चेति पञ्च वायवः।

२१. क) नव।

२२. त्रिगुणम्, अविवेकि, विषयः, सामान्यम्, अचेतनम्, प्रसवधर्मि - इत्येतानि व्यक्ताव्यक्तयोः साधर्म्याणि।

॥ इति तृतीयः पाठः ॥



## ४

# सांख्यदर्शने सत्कार्यवादः

## प्रस्तावना

प्रत्येकं दर्शनानां केचित् विशेषविषयाः भवन्ति यत्र तानि दर्शनानि उत्कृष्टतां भजन्ते, तेषां दर्शनानां च प्रधानवादत्वेन प्रसिद्धिः जाता। यथा न्यायवैशिषकदर्शने अनुमानप्रमाणम्, अद्वैतवेदान्तदर्शने विवर्तवादः, तथैव सांख्यदर्शनस्यापि प्रसिद्धोऽयं वादः सत्कार्यवादः। वस्तुतस्तु कार्यकारणसम्बन्धानुसन्धानपरम्परा प्रतिदर्शनं समवलोक्यते। अतः प्रत्येकं दर्शनप्रस्थाने हेतुहेतुमद्भाववत्त्वं व्याख्यातम्। तद्व्याख्यानवैचित्र्याद्धि प्रत्येकं दर्शनानां स्वातन्त्र्यम्। सत्कार्यवादो हि सांख्यिनां कार्यकारणविषये राद्धान्तितः। सांख्यकारिकाग्रन्थे आदौ सांख्यसम्मतानि प्रत्यक्षानुमानागमाः इति त्रीणि प्रमाणानि विचार्य सौक्ष्यात् प्रधानादितत्त्वानाम् प्रत्यक्षकारणेन उपलब्धिर्न भवतीति निगद्य प्रधानसिद्ध्यर्थं सत्कार्यवादं सयुक्तिकं प्रतिपादयति कारिकाकारः। कार्यम् उत्पत्तेः प्राग् अपि सत् वा असत् वेति अत्र मुख्यः विचारः। सांख्यदर्शनमते कार्यम् उत्पत्तेः प्राग् अपि सदेव। शून्यवादिनां बौद्धानां मते असतः कारणात् सत् कार्यम् उत्पद्यते। नैयायिकाः असत्कार्यवादम् अङ्गीकुर्वन्ति, तेषां मते सतः असज्जायते इति। अद्वैतवेदान्तिनः तु विवर्तवादम् अभ्युपगच्छन्ति। अस्मिन् पाठे सांख्यसम्मतः सत्कार्यवादः विस्तरेण समुपस्थापयिष्यते। समञ्च सत्कार्यसम्बद्धाः बहवः दार्शनिकविषयाः आलोचयिष्यन्ते।



## उद्देश्यानि

अस्य पाठस्य अध्ययनेन -

- सांख्यदर्शने प्रसिद्धस्य सत्कार्यवादस्य विस्तरेण परिचयः लभ्यते।
- सत्कार्यवादसिद्धये सांख्याचार्यैः याः युक्तयः उपस्थापिताः ताः ज्ञायन्ते।
- सत्कार्यवादसम्बन्धिनि शून्यकार्यवादविषये ज्ञानं भविष्यति।
- सत्कार्यवादसम्बन्धिनि असत्कार्यवादविषये ज्ञानं भविष्यति।
- सत्कार्यवादसम्बन्धिनि विवर्तवादविषये ज्ञानं भविष्यति।
- सांख्यानां शून्यवादखण्डनविषये ज्ञानं भविष्यति।
- सांख्यानां विवर्तवादखण्डनविषये ज्ञानं भविष्यति।



## ४.१) असत्कार्यवादः -

असत्कार्यवादः नैयायिकानाम्। तेषां मते सतः असत् जायते, अर्थात् सतः कारणात् असदेव कार्यम् उत्पद्यते इति। यथा - सतः भावरूपात् परमाण्वादेः असत् पूर्वम् अविद्यमानं द्व्यणुकादि जायते, पूर्वम् असदेव तत्तद् घटादिकार्यं दण्डचक्रचीवरादिसामग्रीसमवहिताद् मृदादिकारणाद् भिन्नं सद् उत्पद्यते। अत्रायं भावः - स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव, पश्चात् कारणसामग्रीवशाद् उत्पद्यते इति कार्यकारणयोः अनन्यत्वं परमार्थतः सत्यत्वं चेति। अयम् आरम्भवादः इत्यपि अभिधीयते। तथाहि नैयायिकानां मते घटोत्पत्तेः प्राग् स घटः नासीदेव। कपालद्वयसंयोगे सति नूतनं घटरूपं कार्यम् आरभ्यते इति कारणात् अयम् आरम्भवादः इति उच्यते।

## ४.२) शून्यकार्यवादः -

"शून्यता एव जगतः परमार्थता" - शून्यवादिनः बौद्धाः आमनन्ति। तेषां मते 'असतः सज्जायते'। अस्यार्थो हि अभावाद् भावः जायते इति। विनष्टाद् एव बीजाद् अङ्कुरः उत्पद्यते, नष्टात् च दुग्धात् दधि, विनष्टात् मृत्पिण्डाद् घटः - इत्येवम् अभावग्रस्तेभ्यः बीजादिभ्यः अङ्कुराद्युत्पत्तिदर्शनात्, "सर्वे कार्यरूपाः भावाः अभावकारणकाः कार्यत्वात् बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्" इत्येवम् अनुमीयते। तदा च बौद्धमतानुवादि गौतमीयं पूर्वपक्षसूत्रम् - "अभावाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" (४.१.१४) इति। कार्याद् अव्यवहितपूर्ववृत्तित्वं हि कारणत्वम्, तद्धि अङ्कुरादिकार्याद् अव्यवहितपूर्ववर्तिनः बीजाद्यभावस्य एव सम्भवति, न तु बीजादेः - इति अभावस्य सिद्धं कारणत्वम्, न तु भावस्य। "असदेवेदमग्र आसीदेकमेवाद्वितीयम्, तस्मादसतः सज्जायते" इति श्रुत्या प्रागुत्पत्तेः सर्ववस्त्वभावः एवासीत् इति द्योत्यते। तस्मादेव अभावात् सृष्टिवेलायां सर्ववस्तूनाम् उत्पत्तिर्जाता इति स्पष्टं प्रतिपाद्यते, ततश्च लोके अपि यद् बीजादिभ्यः अङ्कुराद्युत्पत्तिर्दृश्यते तत्रापि बीजादिनाशादेव अङ्कुराद्युत्पत्तिरिति अवश्यम् अभ्युपेयम्। सतः सदुत्पद्येत चेत् न कारणम् उपमृद्य कार्यं प्रादुर्भवेत्। उपमृद्य च कारणं कार्यं प्रादुर्भवदुपलभ्यते यथा बीजाङ्कुरः। कारणोपमर्दश्च अभावः, न जातु भावः। तस्मात् प्रतिपद्यते नूनम् असतः सदुत्पद्यते, न सतः सदिति।

## ४.३) विवर्तवादः -

सतः विवर्तभूतम् इदं कार्यरूपं जगदिति अद्वैतवेदान्तिनः अङ्गीकुर्वन्ति। तस्मात् वेदान्तिनां मते विवर्तवादः स्वीक्रियते। कः नाम विवर्तः इति चेत् पूर्वरूपापरित्यागेन असत्यनानाकारेण प्रतिभासः विवर्तः। यथा - शुक्तिकायां रजतस्य, रज्ज्वां वा सर्पस्य प्रतीतिः। तथाहि उच्यते विवर्तवादविषये -

**सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।**
**अतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः।।** इति।

अस्यार्थः - यदा कस्यचित् वस्तुनः वस्तुगत्या अन्यथारूपेण विकारः भवति तदा विकार इति उच्यते अर्थात् परिमाणः इति उच्यते। यथा दुग्धं दधिरूपेण परिणमते। वस्तुगत्या दुग्धस्य दधिरूपेण



परिणामः भवति। दुग्धं स्वं स्वरूपं परित्यज्य नूतनं दधिरूपं गृह्णाति। परन्तु यदा कस्यचित् वस्तुनः वस्तुगत्या अन्यथारूपेण विकारः न भवति, वस्तु तेनैव रूपेण विराजते, परन्तु भ्रान्त्या वस्तु भिन्नरूपेण प्रतीयते तदा स विवर्तः इति उच्यते। यथा शुक्तौ इदं रजतमिति भ्रमज्ञाने सति रजतम् स्वीकर्तुं भ्रान्तजनस्य प्रवृत्तिः भवति। वस्तुतः शुक्तिः शुक्तिरूपेण एव विराजते, न तु रजतरूपेण। रजतरूपं यत् कार्यं भ्रान्त्या प्रतिभाति, वस्तुगत्या तत् मिथ्याभूतम्। एवं कारणस्य वस्तुतः तथात्वेनैव स्थितिः, भ्रान्त्या च कारणस्य मिथ्याकार्यत्वेन प्रतीतिः एव विवर्तः। एतन्मते कारणमेव कार्यस्वरूपेण भासते इति कारणस्यैव सत्यत्वं, न तु कार्यस्य सत्यत्वम्। एका कारणसत्ता एव विविधकार्याकारेण भासिता भवति, सुवर्णं कुण्डलाकारेण भासते, मृच्च घटाकारेण। कुण्डलं यथा सुवर्णस्यैव आकारभेदः, घटश्च मृत्तिकायाः तथा परिदृश्यमानं विश्वमपि सद्वस्तुनः विविधाकारमात्रम्। प्राक् सृष्टेः सन्मात्रमेव इदमासीत्, नातिरिक्तं किञ्चिदप्यासीत्। घटशरावादयः यथा परस्परं विभिन्ना अपि मृत्तिकातः नातिरिच्यन्ते, पिण्डस्य घटात् घटस्य च पिण्डात् भेदेऽपि मृत्तिकातो द्वयोरपि अभिन्नत्वात्, तथैव विविधसृष्टपदार्थाक्रान्तः संसारोऽपि वस्तुतः सद् नातिरिच्यते, अपि तु सतः एव रूपान्तरं संसारः, यत् सद् वस्तु तद् ब्रह्मैव। अद्वैतवेदान्तमते अविद्याकारणाद् इदं मिथ्याभूतं जगत् परमार्थसत्यभूते ब्रह्मणि अध्यस्यते, ब्रह्मज्ञाने सति अविद्यायाः नाशः भवति, तेन मिथ्याभूतं जगदपि ब्रह्मणि बाधितं भवति। अयं विवर्तवादः मायावादिवेदान्तिनाम्। अयम् अनिर्वचनीयकारणवादः सत्कारणवादः वेति अभिधीयते।

## ४.४) सत्कार्यवादः

भारतीयदर्शनेषु सत्कार्यवादः अत्यन्तं प्रसिद्धः। सांख्यदर्शने सत्कार्यवादः स्वीक्रियते। कः नाम सत्कार्यवादः इति चेत् कार्यम् उत्पत्तेः प्राक् विद्यमानम् अस्ति न वेति प्रश्ने दार्शनिकानां भिन्नमतानि सन्ति। तत्र शून्यवादिबौद्धानां मते कारणम् हि अभावात्मकम् असत्, ततः सत् कार्यम् उत्पद्यते इति। आरम्भवादिनः नैयायिक-वैशेषिकाः वदन्ति यत् उत्पत्तेः प्राक् कार्यम् असत्, अर्थात् विद्यमानं न तिष्ठति, नूतनम् एव कार्यं कारणात् उत्पद्यते इति। तस्मात् ते असत्कार्यवादिनः इति। अद्वैतवेदान्तिनां मते कारणमेव वस्तुतः सत्, ततः अनिर्वचनीयम् एव कार्यम् उत्पद्यते। एते विवर्तवादिनः। सांख्यानां मते उत्पत्तेः प्राक् कार्यं सत्, अर्थात् उत्पत्तेः प्राक् कार्यं कारणे अव्यक्तरूपेण विराजते, तस्मात् ते सत्कार्यवादिनः। तथाहि एतन्मते तिलेभ्यः तैलं यदा उत्पद्यते तदा तैलः तिलेषु पूर्वतः एव अव्यक्तरूपेण विराजते इति अङ्गीकरणीयम्। तिले तैलं पूर्वतः अविद्यमानं चेत् तदेव कार्यं न कदापि उत्पद्येत। एवं सतः भावरूपात् प्रधानादेः सत् कारणे विद्यमानमेव अव्यक्तरूपं कार्यं जायते कारकव्यापारेण अभिव्यज्यते। जायते उत्पद्यते इत्यादिशब्दानाम् सम्पूर्णतः नूतनस्य वस्तुनः सृष्टौ न तात्पर्यं ग्राह्यम्, अपि तु अव्यक्तरूपाद् व्यक्तरूपेण अभिव्यक्तौ तात्पर्यम् अवधेयम्।



### पाठगतप्रश्नाः १

१. असत्कार्यवादः केषाम्।



क) बौद्धानाम् ख) सांख्यानाम् ग) नैयायिकानाम् घ) अद्वैतवेदान्तिनाम्

२. सत्कार्यवादः केषाम्।

क) बौद्धानाम् ख) सांख्यानाम् ग) नैयायिकानाम् घ) अद्वैतवेदान्तिनाम्

३. विवर्तवादः केषाम्।

क) बौद्धानाम् ख) सांख्यानाम् ग) नैयायिकानाम् घ) अद्वैतवेदान्तिनाम्

४. "शून्यता एव जगतः परमार्थता" - केषां मतम्।

क) बौद्धानाम् ख) सांख्यानाम् ग) नैयायिकानाम् घ) अद्वैतवेदान्तिनाम्

५. अतत्त्वतोऽन्यथाप्रथा _________।

क) विकारः ख) परिणामः ग) विवर्तः घ) संस्कारः।

६. को नाम विकारः।

७. को नाम विवर्तः।

८. सत्कार्यवादमते उत्पत्तेः प्राक् कार्यं कारणे केन रूपेण तिष्ठति।

## ४.५) सत्कार्यवादाभ्युपगमे कारणानि -

सत्कार्यवादाभ्युपमगे सांख्यानां स्वकीयाः युक्तयः सन्ति। तथाहि उच्यते सांख्यकारिकायाम् -

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।**। इति। [९]

सांख्यकारिकायां सत्कार्यवादस्य अभ्युपगमे पञ्च कारणानि प्रदर्शितानि। तानि हि - १. असदकरणात् २. उपादानग्रहणात् ३. सर्वसम्भवाभावात् ४. शक्तस्य शक्यकरणात् ५. कारणभावात् चेति।

कारणव्यापाराद् ऊर्ध्वमिव ततः प्रागपि सदेव कार्यम्, कुतः। (१) **असदकरणात्**- असतः कर्तुम् अशक्यत्वात् सदेव हि कर्तुं शक्यते नासदिति। पुनः कस्मात्। (२) **उपादानग्रहणात्**- कारणैः सह कार्यस्य सम्बन्धात्-- कार्येण सम्बद्धं हि कारणं कार्यस्य जनकं भवति नासम्बद्धं, सम्बन्धश्च कार्यस्य असतः न सम्भवति, तस्मात् सदिति। पुनः कस्मात्। (३) **सर्वसम्भवाभावात्** -- कस्यचित् उत्पत्तये किञ्चिद् उपादीयते, न तु सर्वस्य उत्पत्तये सर्वम् उपादीयते इति कार्यकारणत्वयोः नियमः उत्पत्तेः प्राक् कार्यस्य असत्त्वपक्षे न उपपद्यते, घटोत्पादनार्थं मृत्तिका गृह्यते, न तन्त्वादि, यदि उत्पत्तेः प्राग् असदेव कार्यं स्यात् तदा कार्यासत्त्वस्य सर्वत्र अविशेषात् तन्त्वादिभ्योऽपि घट उत्पद्येत, न च उत्पद्यते, तस्मात् न कार्यम् असत्, सत्त्वपक्षे तु घटस्य मृत्तिकायां सत्त्वात् मृत्तिकातः घटोत्पत्तिः सम्भवति, असम्बद्धस्य जन्यत्वे तु सर्वं कार्यजातं सर्वस्मात् भवेत्, न चैतदस्ति, तस्मात् सदिति। पुनः कस्मात्। (४) **शक्तस्य शक्यकरणात्** -- शक्तेन हि कार्यं क्रियते न अशक्तेन, यतः शक्तं कारणं शक्तिसम्बद्धमेव शक्यं करोति, न असम्बद्धमिति शक्तस्य शक्यकार्यकरणान्न असतः उत्पत्तिः इत्यर्थः। कारणे तदात्मना वर्तमाना कार्यस्य अव्याकृतावस्थारूपा अनागतावस्था एव कार्यनियामिका शक्तिः, तया सम्बद्धं कार्यं च शक्यमिति अनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वात् न कार्यस्य असत्त्वमिति तत्त्वम्। पुनः कस्मात्। (५)



**कारणभावात्** -- कार्यस्य कारणात्मकत्वात् इत्यर्थः, न हि कारणाद् भिन्नं कार्यं, कारणं च सदिति कथं तदभिन्नं कार्यम् असद् भवेत्, तस्मात् सदिति।

## ४.५.१) असदकरणात् -

तत्र उत्पत्तेः प्रागपि कार्यस्य सत्तां प्रति प्रथमं हेतुम् आह असदकरणात् इति। असतः अभावात्मकस्य अकरणात् केनचित् प्रकारेणापि कर्तुम् अशक्यत्वाद् इत्यर्थः। सांख्यानां नये कारकव्यापारात् पूर्वं कार्यम् असत् अभावात्मकं चेत् केनापि प्रकारेण तस्य कार्यस्य उत्पत्तिः कर्तुं न शक्यते। कारणमध्ये सूक्ष्मतया विद्यमानस्य अव्यक्तकार्यस्य एव कारकव्यापाराद् व्यक्तरूपेण प्रकाशनं कर्तुं शक्यते। तथाहि उच्यते सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रेण - "असच्चेत् कारणव्यापारात् पूर्वं कार्यं नास्य सत्त्वं कर्तुं केनापि शक्यं, न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते।" इति।

ननु "सन् घटः, असन् घटः" इति व्यवहारः अस्माभिः क्रियते। पाकात् पूर्वम् यथा "श्यामः घटः" इति घटे श्यामता, पाकानन्तरं च "रक्तः घटः" इति घटे रक्तता उपपद्यते तथैव उत्पत्तेः प्राग् घटस्य असत्त्वं धर्मः, उत्पत्तेः अनन्तरं घटस्य सत्त्वं धर्मः इति सदसत्त्वे विकारजातस्य धर्मौ अभ्युपगन्तुं शक्यते इति चेत् न, सदसत्त्वे हि धर्मौ, न तौ धर्मिणम् अन्तरेण स्थातुम् अर्हतः। यतो धर्मिसत्त्वं विना धर्मसत्त्वम् अनुपपन्नम् तस्मात् उत्पत्तेः प्रागपि कार्यस्य सत्त्वं स्थितम् इति अङ्गीकरणीयम्। अस्यार्थः - यदि सदसत्त्वयोः धर्मत्वं स्वीक्रियते तर्हि असत्त्वसमये तन्नास्तीति उच्येत। तदा कस्य धर्मः असत्त्वम् इति वक्तव्यम्, न हि अविद्यमाने धर्मिणि तस्य धर्मः विद्यमानः इति कथञ्चिद् उपपद्यते। धर्मिसत्त्वे अभ्युपगते चेत् धर्मसत्त्वं स्वत एव अभ्युपगतं भवतीति नैव प्रागुत्पत्तेः कार्यासत्त्वं जातु सिध्यति प्रत्युत कार्यसत्त्वमिति।

किञ्च, धर्मिसम्बन्धेन विद्यमानेन धर्मेणैव तदाश्रयत्वं सङ्गच्छते इति नियमकारणात् उत्पत्तेः प्राग् "घटः असन्" इति अभिधानम् अपि न सङ्गतं भवति। घटः असन् इत्यस्यार्थः असत्त्वरूपधर्माश्रयो घटः इति। उत्पत्तेः प्राक् धर्मिणा सह सम्बन्धम् अलभमानस्य असत्त्वरूपधर्मस्य धर्म्याश्रयत्वं कथमपि न सङ्गच्छते। यथा 'नीलं कमलम्' इत्यस्य 'नीलगुणरूपधर्माश्रयः कमलम्' इत्यर्थः बोध्यते, तथा 'असन् घटः' इत्यस्यापि 'असत्त्वरूपधर्माश्रयः घटः' इत्येवार्थो वाच्यः। स च नोपपद्यते, कमलेन सह नीलस्य इव असता घटेन सह असत्त्वरूपधर्मस्य असम्बद्धत्वात्। तस्मात् धर्मिसम्बन्धेन विद्यमानेन धर्मेणैव तदाश्रयत्वनियमात् न असम्बन्धेन असत्त्वेन धर्मेण तदाश्रयत्वसम्भवः।

ननु उत्पत्तेः प्रागपि कार्यं सदिति अभ्युपगम्यते चेत् कृतं तर्हि कुलालादिव्यापारेण। न हि अन्यत् किमपि अवशिष्टमस्ति यदर्थं कुलालादिव्यापारः अर्थवान् भवेत्। न च घटादिस्वरूपसिद्ध्यर्थः कारकव्यापारः इति वाच्यम्, तस्य प्रागेव सिद्धत्वात्। करणं हि उत्पत्त्यनुकूलव्यापारः, नासौ सतः जातु सम्भवति। न हि विद्यमानस्य उत्पत्तिः केनचित् क्वचित् दृश्यते। ततश्च यथा प्राक् सिद्धत्वात् मृत्पिण्डादेः कारणस्य स्वरूपसिद्ध्यर्थं न कश्चिद् व्याप्रियेत, तथैव प्राक् सिद्धत्वात् कार्यस्वरूपस्य तत्प्रसिद्धयेऽपि न कश्चित् व्याप्रियते। दृश्यते हि लोके कार्यस्वरूपसिद्ध्यर्थं लोकः व्याप्रियते। अतः अस्ति उत्पत्तेः प्राग् अभावः कार्यस्य येन कारकव्यापारो भवति अर्थवान् इति चेत् उच्यते



वाचस्पतिमिश्रेण - "कारणाच्च सतोऽभिव्यक्तिरेवावशिष्यते" इति। अस्यार्थः - कारणव्यापारात् प्रागपि व्यवहारयोग्यसूक्ष्मरूपेण सिद्धस्य सतः कार्यस्य या व्यवहारयोग्यस्थूलरूपापादनरूपा अभिव्यक्तिः सा पुनः कारणात् कुलालादिव्यापाराद् भवति, इत्येवम् अभिव्यक्तिरेव साध्यतया अवशिष्यते, न उत्पत्तिः इत्यर्थः। तथाहि - यस्य वस्तुनः अभिव्यक्तिः भविष्यति सा तस्या अनागतावस्था, यस्य अभिव्यक्तिः पूर्वम् आसीत् सा तस्य अतीतावस्था। यच्च वस्तु स्वव्यापारारूढम् अभिव्यक्तिमापन्नं भवत् वर्तते सा तस्य वर्तमानावस्था इति स्थितिः। तत्र उत्पत्तेः प्रागपि कार्यं विद्यमानं भवेत् चेत् न अविद्यमानम् इति कारणाद् दण्डचक्रादिना नूतनतया किं साध्यते इति नैयायिकानाम् आक्षेपः। सांख्याः तत्र एवं समादधति - दण्डादीनि यानि सन्ति कारणानि न जातु तानि किञ्चिद् अपूर्वम् असत् घटादिकार्यम् उत्पादयन्ति, किन्तु अव्यक्तावस्थया कारणे विद्यमानमेव घटादिकार्यं वर्तमानास्थां नयन्ति। कारणव्यापाराः कारणमेव पृथुबुध्नोदरादिकार्याकारेण व्यवस्थापयन्ति।

ननु वर्तमानास्थेन मृत्पिण्डेन यथा घटस्य आविर्भावो भवति, घटे उत्पन्ने अतीतावस्थामापन्नात् मृत्पिण्डादपि तथैव पुनः घटोत्पत्तिः किं न जायते, सांख्यमते घटस्य वर्तमानकालेऽपि अतीतावस्थस्य मृत्पिण्डस्य विद्यमानत्वात् इति चेदुच्यते - वर्तमानावस्थापन्नं यत् कारणमस्ति तदेव कार्यस्य व्यक्तावस्थासम्पादने समर्थं भवति, न अतीतावस्थमिति अतीतावस्थेन कारणेन कार्यस्याविर्भावो न भवतीति। ननु कार्यम् उत्पत्तेः प्रागत्यन्तम् असद् भवेच्चेत् कारणव्यापारेणापि नोत्पद्येत। न हि अत्यन्तासच्छशशृङ्गादयः कारणव्यापारेण कथञ्चिदुत्पादयितुं पारयन्ते। सच्चेत् तत्र कारणव्यापारेण नास्ति प्रयोजनम्, तस्य पूर्वमेव विद्यमानत्वात्। अतः प्रागुत्पत्तेः कारणात्मना सद् भवदपि कार्यं कार्यात्मना भवति असदिति अभ्युपगम्यते। अनेन असद्वादो नापद्यते, कारणव्यापारोऽपि च सप्रयोजनः उपपद्यते। तदेव हि लोके कारणव्यापारेण नोत्पद्यते यत् केनापि रूपेण उत्पत्तेः पूर्वं न वर्तते, यथा सिकतासु तैलम्। न चैवमिदं कार्यम् अभ्युपेयते येन असद्वादः आपद्येत। तद्धि प्रागुत्पत्तेः कार्यरूपेण असद् भवदपि कारणरूपेण सद् अभ्युपेयते। तस्य च कारणव्यापारेण उत्पत्तिः युज्यते इति नास्ति कश्चित् विरोधः। कारणव्यापारो हि न किञ्चिद् अपूर्वं कुरुते। तत्र तत्सामर्थ्याभावात्। अन्यथा सिकतासु तैलमपि कुर्वीत। न च तत्कुर्वाणो लोक्यते। तर्हि किं तेन क्रियते। कारणरूपेण सद्भवत् कार्यं येन कार्येण रूपेण सन्न विद्यते तेन रूपेण तस्य सत्त्वमापाद्यते इति।

कारणव्यापाराद् असतः एव कार्यस्य अभिव्यक्तिरस्तु इति चेत् न, पूर्वं सतः एव वस्तुनः अभिव्यक्तिः युक्ता, न तु असतः। पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानाम्, दोहनेन गोषु पयसः उत्पत्तिः भवति। तिलादिषु प्राग् अविद्यमानानाम् एव तैलादीनां पीडनादिना भवति अभिव्यक्तिः इति सतः एवाभिव्यक्तिः भवति, नासतः इत्यर्थः।. किञ्च, असतः अभिव्यक्तौ तु नास्ति कश्चिद् दृष्टान्तः। तथाहि सांख्यसूत्रम् - "**नासदुत्पादो नृशृङ्गवत्**"(१.११४) इति। यथा असतः नरविषाणस्य न कथञ्चिद् उत्पत्तिर्भवितुम् अर्हति, तथा असतः कार्यस्यापि न शक्या कारकव्यापारेण उत्पत्तिः कर्तुम् इति दुष्टः एव तार्किकाभिमतः असत्कार्यवादः इति भावः। तदेवम् "असदकरणात्" इति प्रथमो हेतुर्व्याख्यातः।



### ४.५.२) उपादानग्रहणात्

कारणव्यापारात् प्राक् कार्यस्य सत्त्वे द्वितीयो हेतुर्हि - "उपादानग्रहणात्" इति। उपादानानां कारणानां ग्रहणं कार्येण सम्बन्धः उपादानग्रहणम्। तस्मादुपादानकारणैः कार्यस्य सम्बन्धादपि कार्यमुत्पत्तेः प्राक् सदेव। कार्येण सम्बद्धं कारणमेव कार्यस्य जनकं भवति। सम्बन्धो हि द्विनिष्ठः भवति। कार्यम् असत् चेत् एकस्य सम्बन्धिनः कार्यस्य असत्त्वे तेन सह कारणस्य सम्बन्धः न उपपद्यते। तस्मात् असम्बद्धस्य कार्यस्य उत्पादे कारणस्य सामर्थ्यं न सङ्गच्छेत। अतः उत्पत्तेः प्राक् कार्यम् सदेव अङ्गीकरणीयम्। तथाहि सांख्यसूत्रम् - "**उपादाननियमात्**" (१.११५) इति।

यस्य खलु कार्यस्य यत् कारणं नियतं यथा मृत्तिका घटस्य, तन्तवश्च पटस्य, तत् सत्येव तस्मिन्नुपलभ्यते नासति। यदि कार्यं प्रागुत्पत्तेः कारणतः अनन्यं न भवेत् तदा न तस्मिन् सत्यपि उपलभ्येत। न हि मृत्तिकातः अन्यः पटः मृत्तिकायां सत्याम् उपलभ्यते, न वा तन्तुभ्यः अन्यो घटः सत्सु तन्तुषु कदाचिदुपलभ्यते। ननु मृत्तिकातः अन्यः घटः, तन्तुभ्यः अन्यश्च पटः, नहि मृत्तिका एव घटः, तन्तवः एव पटः इति चेत् अस्तु तर्हि - यथा अस्ति मृत्तिकातः अन्यः घटः, तथैव मृत्तिकातः पटोऽपि अन्यः एव। इत्थमेव तन्तुभ्यः यथा पटः अन्यः, तथैव तन्तुभ्यः घटोऽपि अन्यः एव। तथापि अस्ति कश्चिद् विशेषः येन घटोत्पत्तये मृत्तिका एव उपादीयते, न तन्तवः, पटोत्पत्तये च तन्तवः एवोपादीयन्ते न मृत्तिकेति। उपलभ्यते च सर्वत्र मृत्तिकायां भवन्त्यां घटः, तन्तुषु भवत्सु पटः। यद्भावे यत् नियमेन उपलभ्यते तस्मादस्ति तस्य अनन्यत्वं प्रागुत्पत्तेः इति निश्चयः। अन्वयव्यतिरेकौ हि उपलब्धिपथम् आरोहन्तौ कार्यस्य कारणान्यत्वानन्यत्वे तावद् अवगमयतः। मृद्घटयोः तन्तुपटयोश्च यथा अन्वयव्यतिरेकौ दृश्येते न तथा मृत्पटयोः तन्तुघटयोश्च प्राप्नुतः। किं कारणम्। प्रागुत्पत्तेः मृदनन्यो घटः, तन्त्वनन्यश्च पटः वर्तते नातो विपरीतम् इति विस्पष्टं तत्कारणम् अवगन्तुं शक्यते, नास्त्यत्र कश्चित् संशयावकाशः।

अपि च लोके खलु दध्यर्थिभिः नियमेन क्षीरमेव उपादीयमानं दृश्यते, घटार्थिभिः च मृत्तिका। कार्यं चेत् प्रागुत्पत्तेः कारणानन्यं न भवेत् तदा तत्तत्कार्यार्थिनां तत्तत्कारणोपादाननियमोऽयं न दृश्येत, किन्तु ततो विपरीतमपि अनुभूयेत। न च दध्यार्थिभिः मृत्तिका उपादीयमाना क्वचित् अनुभूयते, घटार्थिभिश्च क्षीरम्। किमत्र कारणम्। इदमेव कारणं यत् - न ते प्रागुत्पत्तेः मृत्तिकातः अनन्यद् दधि पश्यन्ति, नापि क्षीराद् अनन्यं घटं लोचयन्ति। यस्य तु प्रागुत्पत्तेः असत्कार्यं तस्य सर्वस्य सर्वत्र असत्त्वाविशेषेण कस्मात् क्षीरमेव दध्यर्थमुपादीयते न मृत्तिका, मृत्तिकेव घटार्थम् उपादीयते न क्षीरम् इत्यस्य नास्ति. किञ्चित् सदुत्तरम्। यदि उच्येत असत्त्वाविशेषेऽपि तत्तत्कारणे तत्तत्कार्योत्पादकः कश्चित् अतिशयः हेतुः अभ्युपगम्यते इति चेत् न, प्रकारान्तरेण असद्वादः परित्यज्यते, परिगृह्यते च सद्वादः। कार्यस्य कारणे अनन्यत्वेन अवस्थानस्यैव अतिशयपदार्थत्वात्। न ह्येतद् असत्कार्यवादे कथञ्चित् उपपद्यते।

## ४.५.३) सर्वसम्भवाभावात्

उपादानग्रहणाद् इति द्वितीये हेतौ प्रतिपादितं यत् कार्येण सम्बद्धं कारणमेव कार्यस्य जनकं भवति, न असम्बद्धम्, सम्बन्धस्य द्विनिष्ठत्वनियमात् इति। तत्र यदि आक्षिप्यते यत् असम्बद्धमेव कार्यं कारणाज्जायताम्। असदेव कार्यम् उत्पद्यतां नाम इति तत्र आक्षेपस्यास्य निराकरणाय उच्यते हेत्वन्तरम् - सर्वसम्भवाभावादिति। यदि असम्बद्धात् कारणाद् असम्बद्धस्य कार्यस्य उत्पत्तिः स्वीक्रियते तदा यस्मात् कस्माच्चित् कारणाद् यस्य कस्यापि कार्यस्य उत्पत्तिः आपद्येत, सर्वस्मादेव सर्वं कार्यजातं भवेत्। तेन तन्तुभ्यो घटस्य, मृत्तिकातः पटस्य उत्पत्तिः आपद्येत। एतत्तु न सम्भवति। अतो येन कारणेन यस्य कार्यस्य सम्बन्धः, तेन कारणेन तस्यैव कार्यस्य उत्पत्तिः स्याद् इति अङ्गीकार्यम्। तथा स्वीकृते तु पूर्वोक्तयुक्त्या असतः सम्बन्धस्य अनभ्युपगमानुरोधेन सदेव कार्यम् इति स्वीकार्यम्। तथाह्याहुः सांख्यवृद्धाः -

**असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।**
**असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।।** इति।

श्लोकार्थः - असत्त्वे कार्यस्य उत्पत्तेः प्राग् अविद्यमानत्वे सति, [तेषां कार्याणाम्] सत्त्वसङ्गिभिः सत्त्वधर्माश्रयैः कारणैः सह सम्बन्धो नास्ति न स्यात्, सदसतोः सम्बन्धानुपपत्तेः। कारणैः असम्बद्धस्य च कार्यस्य उत्पत्तिम् इच्छतो मते व्यवस्थितिः "मृद एव घटः कनकादेव कटकम्" "क्षीरादेव दधि" इत्येवंरूपा व्यवस्था न स्यात्, किन्तु "सर्वस्मात् सर्वोत्पत्तिः" इत्येवंरूपा अव्यवस्था एव भवेद् इत्यर्थः। तथा च सांख्यसूत्रम् "**सर्वत्र सर्वदा सर्वासम्भवात्**" (१.११६) इति।



### पाठगतप्रश्नाः-२

९. सत्कार्यप्रतिपादिका सांख्यकारिका का।

१०. सत्कार्यवादाभ्युपगमे कति कारणानि कारिकाकारैः निगदितानि।

क) त्रीणि ख) चत्वारि ग) पञ्च घ) षट्

११. शक्तस्य शक्यकरणात् इत्यत्र शक्तिर्नाम का।

१२. "नासदुत्पादो नृशृङ्गवत्" इति सांख्यसूत्रेण किं बोध्यते।

१३. उपादानग्रहणात् इत्यत्र उपादानग्रहणं नाम किम्।

१४. असत्त्वे नास्ति सम्बन्धः.... इति श्लोकं पूरयत।

## ४.५.४) शक्तस्य शक्यकरणात्

कारणसम्बद्धमेव कार्यं कार्यसम्बद्धेन कारणेन जन्यते, न तु असम्बद्धम् असम्बद्धेन, अन्यथा अनवस्था इति असहमानः तार्किकः शङ्कते - कार्येण असम्बद्धमपि सत् कारणं तदेव कार्यं करोति,



यस्मिन् कार्ये यत् कारणं शक्तं तत् कारणं तत्कार्यं जनयति, न सर्वम्। तेन च "मृद एव घटः, कनकादेव कटकम्" इति व्यवस्था असत्कार्यवादे अपि संघटते, मृदादीनां घटाद्युत्पादने एव शक्तिमत्त्वात्। तस्मात् कार्यकारणयोः सम्बन्धकल्पनेन नास्ति किञ्चित् प्रयोजनम्। कार्योत्पादिका शक्तिर्हि कारणे विद्यते इति कारणात् शक्तिः कारणनिष्ठा। कथं तद् अवगम्यते इति चेत् कार्यदर्शनात् "मृदः एव घटः, कनकादेव कटकम्" इति प्रतिनियतकार्योत्पत्त्यन्यथानुपपत्तिज्ञानात्। तथा चानुमानम् "वह्नौ दाहानुकूला शक्तिरस्ति, दाहरूपकार्यजनकत्वात्, यन्नैवं तन्नैवम्" इति। तत्र कार्यनियामकः कश्चिद् अतिशयविशेषः, सामर्थ्यविशेषो वा शक्तिः। तेन शक्तिमतः एव कारणस्य कार्यजनकत्वाभ्युपगमेन सर्वस्मात् सर्वोत्पत्तिरूपा अव्यवस्था न सङ्गच्छते इति चेदुच्यते सत्कार्यवादाभ्युपगमे चतुर्थो हेतुः - शक्तस्य शक्यकरणात् इति।

कार्यजननशक्तिमति कारणे विद्यमाना सा शक्तिः किं सर्वकार्यविषया (सर्वकार्योत्पादनसमर्था इत्यर्थः) आहोस्वित् शक्यकार्यविषया (यत् उत्पादयितुं शक्यं तत्कार्यविषया इत्यर्थः)। सर्वकार्यविषया इति प्रथमः पक्षः स्वीक्रियते चेत् "सर्वं सर्वस्मात् सम्भवेत्" इत्येवंरूपा अव्यवस्था सुस्थिता एव भवेत्। तेन हि कनके सर्वकार्यविषया शक्तिः अस्तीति ततः घटादीनामपि उत्पत्तिः आपतेत्, "मृदः एव घटः, कनकादेव कटकम्" इति व्यवस्थायाश्च अनुपपत्तिः भवेत्। शक्यकार्यविषया शक्तिः इति द्वितीयः पक्षः स्वीक्रियते चेत् अविद्यमाने शक्ये कार्ये तद्विषया शक्तिः कथमपि वक्तुं न शक्यते इति दोषः आपतति। तथाहि - यदि सा शक्तिः शक्यकार्यविषया इति स्वीक्रियते तदा कारणव्यापारात् प्राक् शक्यं तावत् कारणे नास्तीति शक्यकार्यविषया शक्तिः कारणे कथं तिष्ठेत्। न हि विद्यमाने कारणे अविद्यमाना शक्यकार्यविषया शक्तिः कथञ्चित् स्थातुमर्हति, सतोः एव विषयविषयिभावसम्बन्धस्य सम्भवात्। कारणस्य विद्यमानत्वेन शक्यकार्यस्य च अविद्यमानत्वेन न तयोः कथमपि विषयविषयिभावो घटते।

ननु 'सा शक्तिः सर्वत्र विद्यते' इति स्वीक्रियते, परन्तु सर्वस्मात् सर्वकार्योत्पत्तिस्तु न। तथाभूतः स शक्तिविशेष एव विद्यते, यस्मात् शक्तिभेदात् कारणं किञ्चिदेव कार्यं जनयति न सर्वम्, ततश्च 'मृदः एव घटः, तन्तुभ्यः एव पटः' इति व्यवस्था असत्कार्यवादेऽपि घटते इति न दोषः इति चेत् न। कारणनिष्ठः स शक्तिभेदः कार्यसम्बद्धः कार्यासम्बद्धो वा। कार्यसम्बद्धः स कारणनिष्ठः शक्तिभेदः इति चेत् नैतत् सम्भवति, अविद्यमानेन कार्येण सह विद्यमानकारणनिष्ठशक्तिविशेषसम्बन्धस्य वक्तुम् अशक्यत्वात्। न हि विद्यमानकारणनिष्ठशक्तिभेदसम्बन्धः अविद्यमानकार्येण सह वक्तुं युज्यते, सदसतोः सम्बन्धानुपपत्तेः। यदि स शक्तिभेदः कार्यासम्बद्धः इति स्वीक्रियते तेन "सर्वं सर्वस्मात् सम्भवेत्" इति पूर्वोक्ता अव्यवस्था एव स्यात्। तस्मात् कारणे कार्योत्पादनरूपा शक्तिर्विद्यते, सा च शक्तिः केनचित् सता कार्येण सम्बद्धा इत्येव अङ्गीकरणीयम्। तस्मात् सुष्ठूक्तं - शक्तस्य शक्यकरणात् इति। कारणे तदात्मना वर्तमाना कार्यस्य अनभिव्यक्तावस्थारूपा अनागतावस्था एव कार्यनियामिका शक्तिः, तया सम्बद्धं कार्यं च शक्यम् इति



अनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्यासत्त्वमिति तत्त्वम्। तथाह्याहुः श्रीशङ्करभगवत्पादाः शारीरिकमीमांसाभाष्ये - "शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्या, असती वा कार्यं नियच्छेत्, असत्त्वाविशेषात् अन्यत्त्वाविशेषाच्च। तस्मात् कारणस्यात्मभूता शक्तिः, शक्तेश्चात्मभूतं कार्यम्" इति।

## ४.५.५) कारणभावात्

सत्कार्यवादाभ्युपगमे पञ्चमो हेतुर्हि कारणभावात् इति। कार्यकारणयोः तादात्म्यादपि सत्कार्यवादः प्रतिष्ठामापद्यते इति अनेन हेतुना द्योत्यते। कारणभावात् इत्यस्य अर्थः कार्यस्य कारणात्मकत्वात् इति। न हि कारणाद् भिन्नं कार्यम्, कारणं च सद् इति तदभिन्नं कार्यं कथमपि असद् भवितुम् नार्हति। तथाहि अनुमानम् - घटः सदा सन्, कारणाभिन्नत्वात्, कारणस्वरूपवत् इति। कार्यस्य कारणाभेदसाधनानि च सन्ति प्रमाणानि - "न पटः तन्तुभ्यो भिद्यते तद्धर्मत्वात् - इह यद् यतो भिद्यते तत् तस्य धर्मो न भवति, यथा गौरश्वस्य, धर्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरम्" इति। पटो हि तन्तूनां धर्मः तदवस्थाविशेषः। तस्मात् तन्तुपटयोरभेदः। किञ्च, तन्तुपटयोः अभेदः उपादानोपादेयभावादपि सिद्ध्यति। उपादीयते कार्यजननाय गृह्यते इति उपादानम् - कार्यस्य अनागतावस्थाश्रयीभूतं कारणम्, उपादेयम् व्यवहारार्थिभिः ग्रहीतुं योग्यं कार्यम् इत्यर्थः। ययोः उपादानोपादेयभावः तयोः तादात्म्यं सिद्ध्यति। तन्तुपटयोः उपादानोपादेयभावः लोकतः एव सिद्ध्यति। तथाहि तन्तून् उपादाय एव पटः निर्मीयते जनैः। ययोः अर्थान्तरत्वं, न तयोः उपादानोपादेयभावः सिद्ध्यति, यथा घटपटयोः। तन्तुपटयोस्तु अर्थान्तरत्वं नास्ति इति तयोः उपादानोपादेयभावः सुतरां सङ्गच्छते। तेन च तयोः तादात्म्यमपि सिद्ध्यति। अपि च संयोगाभावात् अप्राप्त्यभावात् च तन्तुपटयोः न अर्थान्तरत्वं सिद्ध्यति। तत्र अप्राप्तयोः प्राप्तिः संयोगः, अप्राप्तिश्च विभागः। एवं च संयोगानाश्रितत्वात् विभागानाश्रितत्वात् च वस्तुनोः अभेदः सिध्यति इति फलति। तथाहि अनुमानम् - "पटः तन्तुभ्यो न भिद्यते, तत्संयोगानाश्रयत्वात्, यद् यतो भिद्यते तयोः संयोगो दृष्टः, यथा घटपटयोः" इति, "पटः तन्तुभ्यो न भिद्यते, तद्विभागानाश्रितत्वात्, यद् यतो भिद्यते तयोः विभागो दृष्टः, यथा हिमवद्विन्ध्ययोः" इति। इत्थं कार्यकारणयोः अभेदे सिद्धे सति कारकव्यापाराद् उत्पत्तेः प्रागपि कार्यस्य सत्त्वम् सिद्धं भवति। ननु यदि तन्तुपटयोः ऐक्यम् अभ्युपगम्यते, तदा 'इमे तन्तवः, पटश्चायम्' इति संज्ञाभेदप्रतीत्यनुपपत्तिः इति चेत् अवयवविन्यासविशेषसंस्थानभेदेन युक्तः एव संज्ञाभेदः इति न किञ्चिद् असमञ्जसम्।

ननु उत्पत्तेः विनाशात् बुद्धिभेदात् व्यपदेशभेदात् अर्थक्रियाभेदात् व्यवस्थाभेदात् च वस्तुनोः भेदः सिद्ध्यति इत्यतः कार्यकारणयोः अभेदसिद्धिर्न शक्यते कर्तुम्, तेन च उत्पत्तेः प्राग् असदेव कार्यमिति सिध्यति। तथाहि - "पटस्तन्तुभ्यो भिद्यते, तत्कार्यत्वेन तत्र नष्टत्वेन वा प्रतीयमानत्वात्" इति उत्पत्तिबुद्धेः विनाशबुद्धेश्च तन्तुपटयोः भेदः सिध्यति। दृश्यते हि लोके उत्पत्तिविनाशौ भिन्नयोः वस्तुनोरेव सम्भवतः, न अभिन्ने वस्तुनि। एवं बुद्धिभेदोऽपि वस्तुनोर्भेदं साधयति। तथाहि - "तन्तवः इमे पटश्चायम्" इत्येवं ज्ञानवैलक्षण्यमपि तन्तुपटयोः भेदसाधकम्। एवं व्यपदेशभेदः - "तन्तुषु पटः"



इत्याधाराधेयरूपः व्यवहारभेदोऽपि वस्तुनोः भेदसाधकः। अर्थक्रियाभेदो यथा "तन्तुभिः पटः सीव्यते, पटेन च देहः आव्रियते" इति प्रयोजनोत्पादनभेदोऽपि कार्यकारणयोः भेदसाधकः। एवम् अर्थक्रियाव्यवस्थाभेदः - विभिन्नप्रयोजनजनकत्वनियमः अपि भेदसाधकः। घटेन एव उदकम् आह्रियते, न तु मृदा इति अर्थक्रियाकारित्वेन मृद्धटयोः भेदः सिद्ध्यति। कार्यकारणयोः यदि अभेदः स्यात् तर्हि मृत्पिण्डेनापि उदकम् आह्रियेत, घटेनापि च भित्तिः सम्पाद्येत इति अव्यवस्था उपलभ्येत, सा च नोपलभ्यते इत्यतः कार्यकारणयोः भेदः अङ्गीकार्यः। इत्येवम् उत्पत्ति-विनाश-बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाः हेतवः कार्यकारणयोः भेदं साधयन्तीति न कार्यकारणयोः तादात्म्यमिति चेत् न, एते हेतवः न कार्यकारणयोः वास्तवम् भेदं साधयितुम् अर्हन्ति। कुतः इति चेत् एकस्मिन्नपि अभिन्ने वस्तुनि तत्तद्विशेषाविर्भावतिरोभावरूपम् औपाधिकं भेदमादाय एतेषाम् उत्पत्तिविनाशादिहेतूनां अविरोधः सिध्यति, तस्मात् नास्ति कश्चित् विरोधः। तथाहि आह वाचस्पतिमिश्रपादः - "यथा कूर्मस्य अङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति च आविर्भवन्ति, न तु कूर्मतः तदङ्गानि उत्पद्यन्ते प्रध्वंसन्ते वा, एवमेकस्याः मृदः सुवर्णस्य वा घटमुकुटादयो विशेषाः निःसरन्तः आविर्भवन्तः उत्पद्यन्ते इत्युच्यन्ते, निविशमानाश्च तिरोभवन्तः विनश्यन्ति इत्युच्यन्ते, न पुनः असताम् उत्पादः सतां वा निरोधः" इति। तथाह्याह भगवान् कृष्णद्वैपायनः श्रीमद्भगवद्गीतासु -

"**नासतो विद्यते भावो नाभावो विद्यते सतः**" इति।

असतः नरविषाणादेः इव अविद्यमानस्यार्थस्य भावः सत्त्वं न विद्यते, सतः विद्यमानस्य चार्थस्य अभावः असत्त्वं न सम्भवति इति श्लोकार्थः।

मृत्सुवर्णादयो यदा आविर्भावरूपविकाशशालिनः तदा "घटादयः उत्पन्नाः" इति व्यवहारः, यदा च मृदादयः कार्यस्य अतीतावस्थारूपसंकोचशालिनः तदा "घटादयः प्रध्वस्ताः" इति व्यवहारः। एवं च संस्थाभेदेन एकस्मिन्नपि उत्पत्तिविनाशयोः उपपन्नत्वात् न उत्पत्तिविनाशबलेन घटादीनां मृदादिभ्यो भिन्नत्वं शङ्क्यम्। एवं बुद्धिभेदोऽपि न भेदसाधकः। तथाहि - पटस्य अनागतावस्थावस्थासु तन्तुषु "तन्तवः इमे" इति प्रत्ययः, पटस्य वर्तमानतावस्थावत्सु च तेषु "पटोऽयम्" इति प्रत्ययः इति एकस्मिन्नपि विलक्षणबुद्धिः उपपद्यते। "तन्तुषु पटः" इत्याधाराधेयरूपः व्यपदेशभेदोऽपि न भेदसाधकः। तथाहि "इह वने तिलकाः" इति व्यवहारः यथा सिद्ध्यति, तथैव "तन्तुषु पटः" इत्यपि अवधेयम्। तिलकनामतरुसमुदायस्य एव वनत्वेन तिलकवनयोः अभेदेऽपि यथा आधाराधेयव्यवहारः, तथा तन्तुपटयोः अभेदेऽपि आधाराधेयव्यवहारः उपपद्यते इति व्यपदेशभेदोऽपि न भेदसाधकः। अर्थक्रियाभेदोऽपि न भेदसाधकः, वह्न्यादौ व्यभिचारदर्शनात्। तथाहि एकः एव वह्निः दाहकः, पाचकः, प्रकाशकश्चेति कारणात् "यत्र यत्र विभिन्नकार्यकारित्वं तत्र तत्र वस्तुभेदः" इति व्याप्तिर्न फलति। एवम् अर्थक्रियाव्यवस्थापि न वस्तुभेदे हेतुः। तथाहि - प्रत्येकं भृत्याः मार्गदर्शनलक्षणाम् अर्थक्रियां कुर्वन्ति, न तु शिबिकावहनम्, मिलितास्तु ते शिबिकां वहन्ति। एवं तन्तवः प्रत्येकं प्रावरणम् अकुर्वाणा अपि मिलिताः सन्तः पटरूपेण आविर्भूताः शरीरादिकम् आच्छादयिष्यन्ति इति। इत्येवम् उत्पत्ति-विनाश-बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाः हेतवः कार्यकारणयोः भेदं न साधयितुमर्हन्तीति साधितम्। तेन च



कार्यकारणयोः तादात्म्यमेव सिद्ध्यति। कार्यकारणयोः तादात्म्याद् सिद्धं प्रागुत्पत्तेः कार्यस्य सत्त्वम् इति सत्कार्यवादाभ्युपगमे कारिकाकारेण उल्लिखिताः पञ्च हेतवः सविस्तरम् आलोचिताः।

## ४.६) शून्यवादखण्डनम्

इत्थं सत्कार्यवादे सयुक्तिकं साधिते सति बौद्धानां मतं न समीचीनताम् आवहन्ति, असतः सदुत्पत्तेः असम्भवात्। न हि वन्ध्यापुत्रस्य उत्पत्तिः दृश्यते, न च वन्ध्यापुत्रात् कस्यचित् उत्पत्तिः सम्भवति। नापि शशविषाणं कारणतया दृष्टिपथम् अवतरति। बीजनाशे अङ्कुरोत्पत्तिदर्शनात् अभावादेव भावोत्पत्तिः इति चेत् न, अङ्कुरादिस्थलेऽपि बीजावयवेषु एव कुतश्चित् निमित्तात् क्रिया प्रादुर्भवति, तेन बीजावयवाः पूर्वावयवसंस्थानं परित्यज्य संस्थानान्तरं च आपद्यन्ते। तस्मात् संस्थानान्तराद् अङ्कुरः उत्पद्यते इति बीजावयवस्यैव कारणत्वं न तु अभावस्य इति सिध्यति।

## ४.७) विवर्तवादखण्डनम्

अद्वैतवेदान्तिनः यत् विवर्तवादम् अङ्गीकुर्वन्ति तन्मतं न समीचीनताम् अर्हति। तथाहि तेषां मते मिथ्याभूतमिदं जगत्, शुक्तिरजतवत् रज्जुसर्पवद्वा। यथार्थज्ञाने सति यथा मिथ्याभूतस्य रजतस्य सर्पस्य च बाधो भवति, तेन शुक्तिस्वरूपं रज्जुस्वरूपं च स्वतः प्रकाशते इति तेषां मतम्। दृष्टान्तस्तु साधुरेव, परन्तु दार्ष्टान्तिके तन्न सङ्गच्छते, असति बाधे प्रत्यक्षसिद्धस्य जगतः मिथ्यात्वं वक्तुम् अशक्यत्वात्। यत्र हि बाधज्ञानं, किञ्चिद् अन्यत् कारणं वा भवति, तत्रैव मिथ्यात्वस्य वक्तुं शक्यते, परन्तु प्रत्यक्षसिद्धं जगत् कदापि न बाध्यते इति कारणात् तस्य मिथ्यात्वं न सङ्गच्छते। तथा च कापिलसूत्रम् - "**जगत्सत्यत्वम् अदुष्टकारणजन्यत्वाद् बाधकाभावात्**"(६.५२) इति। तत्र दुष्टकारणजन्यत्वं यथा पीतशङ्खज्ञानम्। बाधकं च 'नेदं रजतम्' इति ज्ञानम्। न च जगतः दुष्टकारणजन्यत्वम्, प्रकृत्यादीनाम् अदुष्टत्वात्। 'नेदं जगत्' इति प्रत्ययाभावात् बाधकं च नास्ति। तस्मात् जगतः मिथ्यात्वं नैव सङ्गच्छते। श्रुतिरपि जगतः सत्यतां स्पष्टं प्रतिपादयति - "यदिदं किञ्च तत्सत्यमित्याचक्षते" इति, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"इति। वेदान्तसूत्रकारः बादरायणोऽपि "परिणामात्" इत्यादिसूत्रैः प्रपञ्चं ब्रह्मणः परिणामम् अभ्युपैति, न तद्विवर्तमिति।

ननु "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या जगतः बाधितत्वेन अविद्यानामा कश्चन दोषः अस्तीति अङ्गीकरणीयः इति चेत् न, "नेह नानास्ति किञ्चन" इत्यादिश्रुतयः याः अद्वैतिभिः प्रपञ्चबाधकतया अभिप्रेयन्ते ताः वस्तुतः प्रकरणानुसारेण विभागप्रतिषेधपराः, न तु प्रपञ्चस्य अत्यन्ततुच्छतासम्पादिकाः। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतयस्तु नित्यतारूपपारमार्थिकसत्ताविरहरूपम् अर्थं प्रकाशयन्ति, अन्यथा मृत्तिकादृष्टान्तस्य असिद्धिः। न हि लोक मृत्तिकाविकाराणाम् अत्यन्ततुच्छत्वं सिद्धम्, येन दृष्टान्तता स्यात्। इत्थं विवर्तवादो न समीचीनः, अपि तु सत्कार्यवादः एवेति दिक्।





## पाठगतप्रश्नाः-३

१५. सत्कार्यवादाभ्युपगमे चतुर्थो हेतुः कः।

१६. कारणभावादित्यस्य कः अर्थः।

१७. "नासतो विद्यते भावो नाभावो विद्यते सतः" इति वाक्यं कुत्रास्ति।

१८. सत्कार्यवादाभ्युपगमे पञ्चमो हेतुः कः।

१९. जगतः सत्यत्वे कापिलसूत्रं किम्।

२०. पूर्वपक्षिमते वस्तुनोः भेदसाधकाः हेतवः के।

२१. प्रथमपङ्क्तिस्थशब्दैः सह द्वितीयपङ्क्तिस्थानां शब्दानां सङ्गतिः साध्या -

| | |
|---|---|
| १. असतः सत् जायते - | क) नैयायिकाः |
| २. सतः असत् जायते - | ख) बौद्धाः |
| ३. सतः सत् जायते - | ग) अद्वैतवेदान्तिनः |
| ४. सतः मिथ्यारूपेण प्रतीतिः जायते - | घ) सांख्याः |



## पाठसारः -

कार्यम् उत्पत्तेः प्राग् सद् वा असद् वेति प्रश्ने सांख्याः सदेवेति अङ्गीकुर्वन्ति। तेषां मतस्य दृढीकरणाय ते स्वशास्त्रसम्मतां युक्तिं प्रदर्शयन्ति। तथाहि सांख्यकारिकाकारेण ईश्वरकृष्णेन सत्कार्यवादाभ्युपगमे पञ्च कारणानि निगदितानि। तानि हि - असदकरणात्, उपादानग्रहणात्, सर्वसम्भवाभावात्, शक्तस्य शक्यकारणात्, कारणभावाच्चेति। यद् असत् तन्न क्रियते, यथा शशविषाणम्। कारकव्यापारात् पूर्वं कार्यम् असच्चेत् तर्हि न क्रियेत, क्रियते च। अतः सदेव पूर्वमपि। अपि च कार्यं कारणेन प्राक् सम्बद्धम् असम्बद्धम् वा। सम्बद्धं चेत् असतः सम्बन्धानुपपत्तेः प्रागपि सदेव कार्यम्। असम्बद्धं चेत् - इदमेव अस्य कारणम् इदमेव अस्य कार्यम् इति नियमो न स्यात्। यथाहुः -

**असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।**
**असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।।** इति।

किं च कारणात् अभिन्नत्वात् कार्यस्य प्रागसत्त्वं नोपपद्यते। तथाहि – तन्तुभ्यः पटो न भिद्यते तत्कार्यत्वात्। यद् यतो भिद्यते न तत् तस्य कार्यम्। यथा गौः अश्वस्य। तन्तुकार्यं पटः। तस्मात् तन्तोः न भिद्यते। यद् यतो भिद्यते तस्य तेन सह संयोगः अप्राप्तिर्वा स्यात्। यथा कुण्डबदरयोः हिमवद्विन्ध्ययोः वा। न हि पटस्य तन्तुभिः सह तद् उभयम् अस्ति। तस्माद् न तन्तुभ्यो भिद्यते पटः इति अभेदसिद्धेः कार्यं प्रागपि सदेव इति सिद्धम्।



## पाठान्तप्रश्नाः

१. असत्कार्यवादस्य संक्षेपेण परिचयः दीयताम्।

२. शून्यकार्यवादस्य संक्षेपेण परिचयः दीयताम्।

३. विवर्तवादस्य समासेन परिचयः प्रदीयताम्।

४. सत्कार्यवादस्य समासेन परिचयः प्रदीयताम्।

५. सत्कार्यवादाभ्युपगमे कारणानि कानि। तेषां यथेच्छं द्वयोः विस्तरेण आलोचनं क्रियताम्।

६. सत्कार्यवादाभ्युपगमे कारणभावादिति हेतुं विस्तरेण प्रतिपादयत।

७. सत्कार्यवाददिशा शून्यवादखण्डनं समासेन लिखत।

८. विवर्तवादः कथं न शास्त्रसम्मतः इति सांख्यदर्शनदिशा विचार्यताम्।



## पाठगतप्रश्नानाम् उत्तराणि -

१. ग) नैयायिकानाम्।

२. ख) सांख्यानाम्।

३. घ) अद्वैतवेदान्तिनाम्।

४. क) बौद्धानाम्।

५. ग) विवर्तः।

६. सतत्त्वतोऽन्यथाप्रथा विकारः।

७. पूर्वरूपापरित्यागेन असत्यनानाकारेण प्रतिभासः विवर्तः। यथा - शुक्तिकायां रजतस्य, रज्ज्वां वा सर्पस्य प्रतीतिः।

८. अव्यक्तरूपेण।

९. असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।। इति।

१०. ग) पञ्च।

११. कारणे तदात्मना वर्तमाना कार्यस्य अव्याकृतावस्थारूपा अनागतावस्था एव कार्यनियामिका शक्तिः।

१२. नरविषाणवत् असतः उत्पत्तिर्न भवतीति बोध्यते।

१३. उपादानानां कारणानां ग्रहणं कार्येण सम्बन्धः इति उपादानग्रहणम्।

१४. असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः। असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः।। इति।

१५. शक्तस्य शक्यकरणात् इति।



१६. कारणभावात् इत्यस्य अर्थः कार्यस्य कारणात्मकत्वाद् इति।

१७. श्रीमद्भगवद्गीतायाम्।

१८. कारणभावात् इति।

१९. "जगत्सत्यत्वम् अदुष्टकारणजन्यत्वाद् बाधकाभावात्" इति।

२०. उत्पत्तिः, विनाशः, बुद्धिभेदः, व्यपदेशभेदः, अर्थक्रियाभेदः, व्यवस्थाभेदश्च वस्तुनोः भेदसाधकाः हेतवः।

२१. १.ख), २.क), ३.घ), ४.ग)

॥ इति चतुर्थः पाठः ॥



# वेदान्ते प्रामाणानि

## ५

## प्रत्यक्षखण्डे प्रमा

### प्रस्तावना

भारते आस्तिकनास्तिकभेदेन दर्शनानां विभागः क्रियते। आस्तिकदर्शनेषु वेदान्तदर्शनम् अन्यतमम्। वेदान्तमते षट् प्रमाणानि सन्ति। अस्मिन् पाठे दर्शनं, दर्शनप्रयोजनम्, दर्शनभेदाः, दर्शनभेदेन प्रमाणभेद इत्यादिकं समासेन उपन्यस्यते। किञ्च वेदान्तदर्शने अद्वैतवेदान्तः विशिष्टाद्वैतवेदान्तः द्वैतवेदान्तः इत्यादिविभागाः सन्ति। तथापि वेदान्तदर्शम् इत्युक्ते अद्वैतवेदान्तदर्शनम् इत्येव अत्र मत्वा अद्वैतवेदान्तमते यानि प्रमाणानि तानि अत्र उपवर्ण्यन्ते। अतः एतानि प्रमाणानि अद्वैतवेदान्तदर्शने सम्मतानि इति बोद्धव्यम्।



### उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- दर्शनं किमिति ज्ञास्यति।
- दर्शनभेदान् ज्ञास्यति।
- दर्शनप्रयोजनं ज्ञास्यति।
- पुरुषार्थान् ज्ञात्वा स्वजीवनं यापयितुं विवेकं लभेत।
- प्रमाणपदार्थं बुद्ध्वा प्रमाणस्य महिमानं ज्ञास्यति।
- अद्वैतवेदान्तमते प्रत्यक्षप्रमाणं किमिति ज्ञास्यति।

### ५.१) दर्शनम्

दृशिर् प्रेक्षणे इति धातोः ल्युट्-प्रत्यययोगेन दर्शनशब्दः निष्पद्यते। प्रेक्षणम् अत्र न केवलं चक्षुषा दर्शनम् अपि तु ज्ञानसामान्यम्। अर्थात् यदपि ज्ञानं बोधः बुद्धिः प्रमा प्रमितिः जायते तत् प्रेक्षणम्।

धातोः अर्थः फलं व्यापारश्च। दृशिधातोः अर्थः ज्ञानरूपं फलम्, तदनुकूलः व्यापारश्च। स व्यापारः फलानुकूलः अर्थात् फलजनकः। अत्र अनुकूलत्वं हि जनकत्वम्। अतः फलस्य व्यापारे अनुकूलत्वसम्बन्धेन अन्वयः भवति।

कृत्यल्युटो बहुलम् इति सूत्रेण ल्युट् प्रत्ययः बाहुलकार्थे भवति। तेन दर्शनशब्दस्य विभिन्ना अर्थाः सम्भवन्ति। तथाहि व्युत्पत्तयः -



दृश्यते अनेन इति **करण**व्युत्पनः दर्शनशब्दः। तदा ज्ञानानुकूलव्यापारकरणं दर्शनम् इत्यर्थो लभ्यते। ज्ञानजनकव्यापारस्य करणं शास्त्रम्। ज्ञानस्य करणानि यानि सुप्रसिद्धानि प्रमाणानि तान्यपि भवन्ति। अतः दर्शनम् तु **शास्त्रम् प्रमाणं** वा।

पश्यति इति **कर्तृ**व्युत्पन्नः दर्शनशब्दः। अर्थात् कर्तरि ल्युट्, ल्युः वा। तदा ज्ञानानुकूलव्यापारवान् दर्शनः इत्यर्थो लभ्यते। ज्ञानजनकव्यापारस्य आश्रयः तु ज्ञाता अर्थात् **प्रमाता**।

यत् दृश्यते तद् दर्शनम् इति **कर्म**व्युत्पन्नः। तदा ज्ञानानुकूलव्यापारजन्यज्ञानस्य विषयः दर्शनम् इत्यर्थो लभ्यते। ज्ञानस्य विषयस्तु **प्रमेयम्** भवति।

दृश्यते इति दर्शनम् इत्यत्र **भाव**व्युत्पन्नः दर्शनशब्दः। ज्ञानुकूलव्यापारजन्यज्ञानम् इति अर्थो लभ्यते। इदं ज्ञानं तु **प्रमा** एव।

इत्थं दर्शनशब्दस्य चतुर्धा व्युत्पत्तिः सम्भवति। एवञ्च दर्शनशब्दस्य **प्रमाणं प्रमाता प्रमेयम् प्रमा** च इत्येते चतुर्धा अर्थाः भवन्ति।

यदा भारतीयदर्शनं नास्तिकदर्शनम् आस्तिकदर्शनं इति शब्दप्रयोगः भवति तदा, यदा चोच्यते दर्शनं पठामि, दर्शनम् अध्यापयामि इत्यादि तदापि दर्शनशब्दस्यार्थः प्रमाणम् अथवा शास्त्रम् इत्येव।

**शास्त्रम् -**

किं तावत् **शास्त्रम्**। शासु अनुशिष्टौ इति धातोः करणे ष्ट्रन्-प्रत्ययेन शास्त्रशब्दः व्युत्पन्नः। विधिनिषेधभेदेन अनुशासनं द्विविधम्। तथाहि अभियुक्तोक्तिः -

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।

पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

यत् पुंसः अर्थात् मर्त्यस्य नित्ये प्रवृत्तिम् उपदिशति विदधाति, अनित्ये निवृत्तिम् उपदिशति तत् शास्त्रम्।

## ५.२) दर्शनानि

भारते आस्तिकनास्तिकभेदेन दर्शनानां द्वेधा विभागः क्रियते। किमास्तिकत्वं किं वा नास्तिकत्वम्। वेदस्य प्रामाण्यं यानि दर्शनानि अङ्गीकुर्वन्ति तानि आस्तिकदर्शनानि। यानि च वेदस्य प्रामाण्यं नाङ्गीकुर्वन्ति तानि नास्तिकदर्शनानि इति विभागः सुबोधः। वेदप्रतिपाद्यं स्वीकुर्वन्ति, समर्थयन्ति, विदधति तानि आस्तिकदर्शनानि। यानि वेदप्रतिपाद्यस्य विरोधं कुर्वन्ति तानि नास्तिकदर्शनानि। नास्तिको वेदनिन्दकः इति मनुमुनिः।

त्रीणि नास्तिकदर्शनानि। षड् आस्तिकदर्शनानि।

नास्तिकदर्शनानि हि - १) चार्वाकदर्शनम् २) जैनदर्शनम् ३) बौद्धदर्शनम्। बौद्धदर्शनस्यापि चत्वारो भेदाः सन्ति। तथाहि १) माध्यमिकदर्शनम् २) योगाचारदर्शनम् ३) सौत्रान्तिकदर्शनम् ४) वैभाषिकदर्शनम् इति। इत्थम् आहत्य नास्तिकदर्शनानि षड् भवन्ति।



षड् आस्तिकदर्शनानि हि - १) न्यायदर्शनम् २) वैशेषिकदर्शनम् ३) सांख्यदर्शनम् ४) योगदर्शनम् ५) पूर्वमीमांसादर्शनम् ६) उत्तरमीमांसादर्शनम् इति। अत्र उत्तरमीमांसापदेन वेदान्तदर्शनं बोध्यते।

## ५.३) प्रमाणानि

किं दर्शनं कति प्रमाणानि उररीकरोतीति संक्षेपेण उच्यते। तथाहि कारिकाः -

प्रत्यक्षमेकं चार्वाकाः कणाद-सुगतौ पुनः। (आर्हताः प्रत्यक्षमनुमानं चेति)

अनुमानं च तच्चापि साङ्ख्याः शब्दं च ते उभे॥

न्यायैकदेशिनोऽप्येवमुपमानं च केचन।

अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥ (माध्वाः प्रत्यक्षं शब्दश्चेति)

अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।

संभवैतिह्ययुक्तानि तानि पौराणिका जगुः॥

सरलार्थः - चार्वाकाः प्रत्यक्षम् इति एकमेव प्रमाणम् अभ्युपगच्छन्ति। काणादाः वैशेषिकाः, बौद्धाः शाक्याः, आर्हताः जैनाः च प्रत्यक्षम् अनुमानं चेति प्रमाणद्वयम् अभ्युपगच्छन्ति। सांख्याः नैयायिकाः च प्रत्यक्षम् अनुमानं शब्दः चेति प्रमाणत्रयम् अभ्युपगच्छन्ति। केचित् नैयायिकाः तु उपमानमपि अङ्गीकुर्वन्ति। इत्थं नैयायिकाः चत्वारि प्रमाणानि स्वीकुर्वन्ति इति प्रसिद्धिः। मीमांसकैकदेशिनः प्राभाकराः प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः इति पञ्च प्रमाणानि प्रस्तुवन्ति। भाट्टमीमांसकाः वेदान्तिनः च प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः इति षट् प्रमाणानि प्रस्तुवन्ति। पौराणिकास्तु प्रत्यक्षम् अनुमानम् उपमानं शब्दः अर्थापत्तिः अनुपलब्धिः सम्भवः ऐतिह्यं च इति अष्टौ प्रमाणानि अभ्युपगच्छन्ति।



## पाठगतप्रश्नाः-१

१. दर्शनशब्दस्य व्युत्पत्तिं लिखत।

२. बौद्धमते इदं न प्रमाणम्।

१) अनुमानम् २) प्रत्यक्षम् ३) शब्दः ४) एषु किमपि न।

३. शब्दप्रमाणम् एते नाङ्गीकुर्वन्ति।

१) पौराणिकाः २) वेदान्तिनः ३) भाट्टाः ४) बौद्धाः

४. अनुमानप्रमाणम् एते नाङ्गीकुर्वन्ति।

१) चार्वाकाः २) वेदान्तिनः ३) भाट्टाः ४) बौद्धाः

५. अर्थापत्तिप्रमाणम् एते नाङ्गीकुर्वन्ति।

१) पौराणिकाः २) वेदान्तिनः ३) भाट्टाः ४) नैयायिकाः



६. प्रत्यक्षम् अनुमानं चेति द्वे एव प्रमाणे इति के न वदन्ति।

१) चार्वाकाः  २) वैशेषिकाः  ३) आर्हताः  ४) नैयायिकाः

७. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) प्रमाणम् | क) दृश्-धातोः भावे ल्युट् |
| २) प्रमाता | ख) दृश्-धातोः कर्मणि ल्युट् |
| ३) प्रमेयम् | ग) दृश्-धातोः करणे ल्युट् |
| ४) प्रमा | घ) दृश्-धातोः कर्तरि ल्युट् |
| ५) आस्तिकदर्शनम् | ङ) वेदस्य प्रामाण्यं नाभिमतम् |
| ६) नास्तिकदर्शनम् | च) वेदस्य प्रामाण्यम् अभिमतम् |

## ५.४) पुरुषार्थः

सर्वेऽपि प्राणिनः इष्टं प्राप्तुम् इच्छन्ति। अनिष्टं परिहर्तुम् इच्छन्ति। किमिष्टम् किं वा अनिष्टम्। सुखम् इष्टम् दुःखं हि अनिष्टम्। अत एव सुखस्य उपायः अपि इष्टः। दुःखस्य उपायः अपि अनिष्टः।

सर्वेऽपि प्राणिनः सुखं लब्धुं दुःखं च दूरीकर्तुं प्रयतन्ते। सुखं द्विविधम्। नित्यम् अनित्यं च। नित्यं सुखम् आत्मसुखम्। तत् जन्यम् नास्ति। न केनापि कारणेन तत् सुखम् उत्पद्यते। तत् सुखम् तु आत्मस्वभावः एव। अनित्यम् सुखम् जन्यम् अस्ति। तस्य किमपि कारणम् अस्ति। अनित्यसुखस्य कारणं हि धर्मः। धर्मं विना सुखं नैव भवति। धर्मोऽपि जन्यः अस्ति। वेदविहितयागादिः धर्मः। तद्यागादिजन्यः पुण्याख्यः अदृष्टविशेषो वा धर्मः। धर्मः अन्तःकरणे विद्यमानः कश्चित् गुणविशेषः। अथवा स्वर्गादिरेव धर्मः।

दुःखस्य किमपि कारणं तु स्यादेव। सुखं वा दुःखं वा कारणं विना नैव उत्पद्येते। सुखस्य किं कारणम् इति यथायथम् असन्दिग्धं च ज्ञानम् आवश्यकम्। तेन इष्टं यत् सुखं तस्य यत् साधनं तत्र निष्ठया प्रवृत्तिः भवेत्। किञ्च सुखस्य कति भेदाः सन्ति तदपि स्पष्टं जानीयात्। इत्थम् 'इदं मदिष्टसाधनम्' इति ज्ञानम् प्रवृत्तिं प्रति कारणं भवति।

अर्थ्यते इति अर्थः। पुरुषस्य अर्थः पुरुषार्थः। अथवा पुरुषेण अर्थ्यते स पुरुषार्थः। अर्थात् पुरुषः नरो वा नारी वा यद् कामयते इच्छति अर्थयते स एव पुरुषार्थः।

पुरुषः सुखमेव अर्थयते। अतः सुखमेव हि पुरुषार्थः सकलप्राणिसाधारणः। सुखस्य प्रकाराः सन्ति। अतः एव पुरुषार्थस्य प्रकाराः सन्ति। नित्यसुखं हि मोक्षः कथ्यते। अनित्यसुखं हि कामः कथ्यते। कामस्य कारणं हि धर्मः कथ्यते। धर्मस्य साधनं हि अर्थः कथ्यते। अर्थो हि धर्मस्य सामग्री धनादिकम्। एवं धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः सुप्रसिद्धा वैदिकसंस्कृतौ। तेषु काममोक्षौ मुख्यौ।



कामस्य साक्षात् कारणं धर्मः। धर्मस्य प्रयोजकः अर्थः। कामलाभाय एव धर्मः अर्थः च सेव्यते नान्यथा। अतः धर्मार्थौ गौणौ। मुख्ययोः काममोक्षयोः अपि मोक्षः नित्यः। अतः मोक्षः एव परमः पुरुषार्थः। अर्थः अनित्यः इति प्रत्यक्षेण ज्ञायते। इन्द्रियजन्यं सुखम् क्षणिकम् इति तदपि अनित्यमेव इति अनुभवसिद्धम्। अनित्यसुखस्य कारणं धर्मः अपि अनित्यः एव। न हि कारणसत्त्वे कार्याभावः भवति।

वेदान्ते श्रुतिः तदनुकूला युक्तिः अनुभवश्च इति एतत् त्रितयम् सदा प्रमाणत्वेन उपन्यस्यते।

कामादीनाम् अनित्यत्वे श्रुतिः प्रमाणम् - तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते। (अर्थः - इह अस्मिन् लोके धर्माधर्मकर्मनिर्मितः लोक्यते इति लोकः घटादिः यथा क्षीयते तथा लोकान्तरे पुण्यनिर्मितः लोकः स्वर्गादिः नश्यतीति।)

तथा च स्मृतिः - ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। (गीता ९.२१) (अर्थः - ये पुण्यम् आसाद्य स्वर्गं गच्छन्ति ते विशालं विस्तीर्णं स्वर्गलोकं भुक्त्वा यदा तद्भोगजनकं पुण्यं क्षीणं भवति तदा मर्त्यलोकम् मनुष्यलोकं विशन्ति जनिं लभन्ते। ) अत्र गीतोक्तेः इदं स्पष्टं यत् पुण्यं क्षीणं भवति। अर्थात् धर्मः पुण्यम् अनित्यम् अस्ति। अतः तज्जन्यम् सुखम् कामः अपि अनित्यः एव।

तथाहि युक्तिः - यत्कृतकं तदनित्यम् इति नियमः दृष्टानुमानोभयसिद्धः। धर्मः कर्मजन्यः। अतः अनित्यः। कामः धर्मजन्यः। अतः अनित्यः। धर्मलाभः कथं भवतीति जैमिनिमुनिप्रणीते धर्ममीमांसाशास्त्रे सविस्तरं वर्णितमस्ति। तत्र प्रथमं सूत्रम् - अथातो धर्मजिज्ञासा इति।

इत्थं सिद्धम् यत् मोक्षः एव परमः पुरुषार्थः नित्यत्वात्। मोक्षः ब्रह्मज्ञानाद् भवति इति अद्वैतवेदान्तस्य सिद्धान्तः। अतः ब्रह्म किम्। तज्ज्ञानं किम्। तल्लाभस्य प्रमाणं किमिति जिज्ञासा। तन्निवृत्तये अद्वैतवेदान्तमतानुकूलानि प्रमाणानि निरूप्यन्ते। एतानि प्रमाणानि एव एतेषां पाठानां प्रधानं विषयः।



## पाठगतप्रश्नाः -२

८. सर्वे प्राणिनः किमच्छन्ति।

९. सर्वे प्राणिनः किं नेच्छन्ति।

१०. सुखं कतिविधम्। किं च तत्।

११. किं नित्यसुखम्।

१२. किमनित्यं सुखम्।

१३. अनित्यसुखस्य कारणं किम्।

१४. दुःखस्य कारणं किम्।

१५. प्रवृत्तिं प्रति किं ज्ञानं कारणं भवति।

१६. पुरुषार्थपदस्य व्युत्पत्तिः का।

१७. पुरुषार्थाः कति के च।



१८. गौणमुख्यभेदेन पुरुषार्थान् लिखत।

१९. मोक्षस्य परमपुरुषार्थत्वे को हेतुः।

२०. मोक्षः कस्माद् भवति।

## ५.५) ज्ञानम्

### ५.५.१) प्रस्तुतिः

ज्ञानम् बोधः प्रमा प्रमितिः बुद्धिः प्रतीतिः इति प्रायः समानार्थकाः शब्दाः।

लौकिके व्यवहारे 'अयं ज्ञानी', 'स बहु जानाति', 'असौ बुद्धिमान्' इत्यादीनि वाक्यानि प्रयुज्यन्ते। 'अयम् अधिकं जानाति' इति वाक्ये ज्ञानशब्दस्य यः अर्थः स शास्त्रे अभिप्रेतः नास्ति। शास्त्रे यद्यपि बहूनि लक्षणानि ज्ञानस्य कृतानि तथापि सामान्यतः ज्ञानं किमिति तु बोद्धव्यम्। प्रमाणादिविषयस्य पठनाय सुबोधाय च बहूनि पारिभाषिकपदानि प्रयुज्यन्ते। तेषां विषये स्पष्टं ज्ञानम् अपेक्षितम्। अतः इतः परं तानि प्रस्तूयन्ते।

### ५.५.२) ज्ञानम्

प्रथमम् ज्ञानम् कथम् उत्पद्यते इति प्रक्रिया प्रदर्श्यते।

मम सम्मुखे घटः अस्ति। चक्षुर्भ्याम् घटं पश्यामि। यावत् घटं पश्यामि तावत् अन्यत्र स्थितं पटं न पश्यामि। यदा अन्यत्र स्थितं पटं पश्यामि तदा पूर्वघटम् अन्यत्र स्थितं घटं वा न पश्यामि। एवम् एकस्य पदार्थस्य यदा भानं भवति तदा अपरस्य पदार्थस्य तत्क्षणे भानं न भवति। पटदर्शनानन्तरम् पुनः तमेव घटं पश्यामि चेद् उत्तरक्षणे घटज्ञानम् भवितुमर्हति। परन्तु एककालम् इन्द्रियस्य येन पदार्थेन सम्बन्धः अस्ति तस्यैव भानं भवति, नान्यस्य। तस्मिन् क्षणे उत्पन्नं भानमेव बोधः, ज्ञानम् कथ्यते। यदा घटं पश्यामि तदा घटज्ञानम् अर्थात् घटविषयकं ज्ञानम् अस्ति। तदा पटज्ञानं नास्ति। यदा पटं पश्यामि तदा पटज्ञानम् अस्ति। किन्तु तदा घटज्ञानं नास्ति। यद्यपि पूर्वक्षणे घटज्ञानम् आसीत् तथापि वर्तमानक्षणे तु पटज्ञानम् अस्ति, घटज्ञानं नास्ति। वर्तमानक्षणे यद् भानं तदेव ज्ञानम्। पूर्वक्षणे एकम् ज्ञानम् उत्पन्नम् द्वितीयक्षणे वर्तमानक्षणे द्वितीयं ज्ञानम् उत्पन्नम्। परन्तु पूर्वक्षणस्य ज्ञानम् इति वर्तमानक्षणेऽपि ज्ञानम् इति न उच्यते। अतः घटदर्शनानन्तरम् यदा पटं पश्यामि तदा घटपटयोः ज्ञानम् अस्ति इति न उच्यते। ननु यदि बहुक्षणम् यावत् एकमेव विषयम् पश्यामि चेत्। यदि घटमेव निरन्तरम् किञ्चित् कालं पश्यामि तदा तु तावति कालांशे सर्वेषु क्षणेषु विद्यमानं ज्ञानम् एकमेव। एकमेव ज्ञानं निरन्तरम् अस्ति। अर्थात् प्रतिक्षणं भिन्नभिन्नविषयाणां ज्ञानं भवति चेत् प्रतिक्षणं ज्ञानं भिन्नम्। एवञ्च वर्तमानक्षणे यद् ज्ञानं तदेव ज्ञानम्। पूर्वक्षणेषु उत्पन्नं ज्ञानम् वर्तमानक्षणे ज्ञानत्वेन गृह्यते। यथा एकं पुस्तकं पठितम्। ततः परं अपरं पुस्तकं पठति, घटं वा पश्यति। तदा प्रथमपुस्तकस्य ज्ञानं तस्य अस्ति इति शास्त्रीयशैल्यां न कथ्यते। यतो हि वर्तमानक्षणे तस्य अन्तःकरणे वर्तमानज्ञानमेव अस्ति।



## ५.५.३) अनुभवः संस्कारः स्मृतिः च

ज्ञानस्य यो विषयः सः अर्थः पदार्थः ज्ञेयः ज्ञातव्यः प्रमेयः वा कथ्यते। यदा विषयस्य ज्ञानं भवति तदा कदाचित् अपेक्षाबुद्धिः भवति, कदाचित् उपेक्षाबुद्धिः भवति। यथा नगरादिषु गमनकाले बहून् जनान् गृहाणि वृक्षान् च पश्यामः। परन्तु तेषां दर्शनं भवतु इति मनोभावः नास्ति। तत्र दर्शनं भवति चेत् भवतु, न भवति चेन्न भवतु इति उदासीनमनोभावः अस्ति। अर्थात् दर्शनस्य उपेक्षा अस्ति। परन्तु यदा किमपि स्थलं भवनम् दुर्गं दृश्यम् वा द्रष्टुं गच्छामः तदा तु तत्र अवधानम् अस्ति। किञ्च परवर्तिकाले वदामः यद् 'अहं तत्र दुर्गं दृष्टवान्। दुर्गे राजप्रासादम् दृष्टवान्। मन्दिरं दृष्टवान्। मन्दिरम् अति प्राचीनम् अस्ति' इत्यादि। परन्तु मार्गे यान् जनान् वृक्षान् वा दृष्टवन्तः तान् न तथा सम्यक् स्मरामः परवर्तिकाले। परवर्तिकाले यदा स्मरणं स्मृतिः वा भवति, तदा तु न स दुर्गः, न वा तद् मन्दिरं सम्मुखे अस्ति। तथापि तद्विषयकं स्मरणं भवति। अत एव वयं तत्र दृष्टानाम् बहूनाम् दृश्यानाम् वर्णनं कर्तुं प्रभवामः। तर्हि पूर्वदृष्टस्य किमपि चिह्नम् , कश्चित् संस्कारः अन्तःकरणे उत्पन्नः। तत् चिह्नम्, स संस्कारः एव परवर्तिकाले स्मृतिं प्रति कारणं भवति। यदा दुर्गदर्शनं भवति तदा दर्शनेन यद् यद् ज्ञानम् उत्पद्यते तद् सर्वमपि ज्ञानम् अनुभवः इति कथ्यते। अयम् अनुभवः अपेक्षाबुद्धिवशात् अन्तःकरणे किमपि चिह्नं, कमपि संस्कारं करोति। स संस्कारः एव उद्बुद्धः भवति चेत् स्मृतिं जनयति, उत्पादयति। संस्कारस्य उद्बोधार्थम्, जागृत्यर्थम् अपि किमपि कारणम् आवश्यकम्। यथा पर्यटनम् समाप्य आगतम् माम् मित्राणि पृच्छन्ति, किं किं दृष्टमिति। तदा अहं मित्रेभ्यः दृष्टानि दृश्यानि वर्णयामि। अर्थात् अहं स्मारम् स्मारं कथयामि। अत्र मित्राणां प्रश्नवशात् संस्कारः उद्बुद्धः भवति, विजृम्भते, स्फुरति। स संस्कारः स्मृतिं जनयति, उत्पादयति।

एवम् अपेक्षाबुद्धिसहकृतः अनुभवः संस्कारं जनयति। स संस्कारः उद्बोधकवशात् स्मृतिं जनयति।

इत्थम् ज्ञानम् द्विविधम् - अनुभवः स्मृतिः च।

यदा पुरा अन्यत्र दृष्टम् मन्दिरादिकम् अहम् अधुना स्मरामि तदा यद् ज्ञानं तत् स्मृतिः। स्मृतिभिन्नम् ज्ञानम् हि अनुभवः।

यः जानाति स ज्ञाता कथ्यते, यस्य प्रमा भवति स प्रमाता कथ्यते। ज्ञाता एव प्रमाता।

लौकिके व्यवहारे 'अयं ज्ञानी जनः' इति यदा वदन्ति जनाः तदा तस्यार्थः भवति यद् अयं जनः बहून् विषयान् ज्ञातवान्। यदा ज्ञातवान् तदा तद् ज्ञानम् तस्य अन्तःकरणे संस्कारम् अकरोत्। यदि स वाञ्छति तर्हि संस्कारस्य साहाय्येन सः अधुना बहून् विषयान् स्मर्तुं शक्नोति। अतः अयं जनः ज्ञानीति। परन्तु वर्तमानक्षणे स सकलविषयान् जानाति इति शास्त्रीयशैल्या वक्तुं न शक्यते। एवम् अयं ज्ञानी इत्यस्य अर्थः अयम् अनुभवजन्यसंस्कारवान् इत्यर्थः।



## ५.५.४) प्रमा प्रमाता प्रमेयः

ज्ञानस्य विषयः अर्थः पदार्थः ज्ञेयः ज्ञातव्यः प्रमेयः वा कथ्यते इति उक्तमेव। दोषरहितं ज्ञानमेव प्रमा इति सामान्यतः कथ्यते। तादृशज्ञानस्य विषयः एव प्रमायाः विषयः। प्रमायाः विषयः एव प्रमेयः इति कथ्यते। प्रमेयस्य प्रमा यस्य भवति स प्रमाता, ज्ञाता। अर्थात् यत्कर्तृकं प्रमेयविषयं ज्ञानं भवति स प्रमाता। यः यः प्रमायाः विषयः अर्थात् प्रमेयः तस्य किमपि नाम भवति, भवितुम् अर्हति। नाम एव अभिधेयम् कथ्यते। यस्य नाम सः अभिधेयः, अर्थः वा कथ्यते। नाम किमपि पदमेव भवति। अतः पदद्वारा यः अर्थः प्रकट्यते स एव पदस्य अर्थः, पदार्थः। अर्थात् पदबोध्यः अर्थः हि पदार्थः।

एतावता लौकिकव्यवहारस्य सामान्यतः शास्त्रीयं विवेचनं प्रदर्शितम्। परन्तु वेदान्तशास्त्रे इतोऽपि अधिकः भिन्नः च विषयः अस्ति। स क्रमशः अधस्तात् उपन्यस्यते।

यथार्थज्ञानमेव प्रमा भवति। अयथार्थज्ञानम् अप्रमा कथ्यते, भ्रमः कथ्यते।

ज्ञानस्य प्रकारद्वयम् - अनुभवः स्मृतिः च। वेदान्तनये स्मृतिः न प्रमा। प्रमायाः भावः प्रमात्वम्। इदं प्रमात्वम् स्मृतौ न वर्तते।

## ५.५.५) लक्षणलक्षणम्

यस्य लक्षणं तदेव लक्षणस्य लक्ष्यम् भवति। यः विषयः ज्ञापनीयः तस्य विषयस्य किमपि चिह्नं लिङ्गं ज्ञापकं वा उच्यते। तद् लिङ्गमेव लक्षणम्। लक्ष्यते ज्ञायते अनेन इति लक्षणम्। यस्य लक्षणं भवति तत् लक्षितं लक्ष्यम् वा उच्यते। लक्षणं कोऽपि धर्मः भवति। यस्मिन् धर्मे अव्याप्तिः अतिव्याप्तिः असम्भवः चेति त्रयो दोषाः न भवन्ति स एव असाधारणः धर्मः लक्षणम् उच्यते। लक्ष्ये लक्षणम् अस्ति चेत् लक्षणसमन्वयः कथ्यते। लक्ष्यैकदेशवृत्तित्वे सति लक्ष्यापरदेशावृत्तित्वम् अव्याप्तेः लक्षणम्। यावल्लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् अतिव्याप्तेः लक्षणम्। लक्ष्यमात्रावृत्तित्वम् असम्भवस्य लक्षणम्। एतानि सोदाहरणं विशदीयक्रियन्ते।

**अव्याप्तिः** - लक्ष्यैकदेशवृत्तित्वे सति लक्ष्यापरदेशावृत्तित्वम् अव्याप्तेः लक्षणम्। गोः कपिलत्वं लक्षणं कृतं चेत् कपिलासु गोषु वर्तते किन्तु शुक्लगोषु न वर्तते। अतः लक्ष्यीभूतासु गोषु एकदेशे वर्तते अपरदेशे न वर्तते इति अस्य लक्षणस्य अव्याप्तिः दोषः।

**अतिव्याप्तिः** - यावल्लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् अतिव्याप्तेः लक्षणम्। शृङ्गम् गोः लक्षणं कृतं चेत् सर्वासु गोषु शृङ्गमस्ति किन्तु अलक्ष्ये महिषादौ अपि अस्ति। यावति लक्ष्ये यद्यपि वर्तते तथापि अलक्ष्ये गोभिन्ने महिषादौ अपि वर्तते इति शृङ्गम् लक्षणम् अतिव्याप्तिदोषेण दुष्टम्।

**असम्भवः** - लक्ष्यमात्रावृत्तित्वम् असम्भवस्य लक्षणम्। गोः चतुर्षु पादेषु प्रतिपादं शफद्वयम् भवति। शफम् खुरः कथ्यते। आहत्य अष्टौ खुराः भवन्ति एकस्याः गोः। तत्र यदि गोः लक्षणं कृतं यद् यस्य एकपादे एकः एव शफः सा गौः। तदा सकलासु गोषु क्वापि एकपादे एकः शफः नास्ति। अतः लक्ष्यमात्रे अवर्तमानम् इदं लक्षणम्। अतः तद् असम्भवदोषेण दुष्टमिति बोध्यम्।



**स्वरूपं लक्षणं च** – स्वस्य आत्मनः रूपम् स्वरूपम्। स्वात्मकः पदार्थः। यथा घटस्वरूपम् द्रव्यम्। लक्षणे एकाधिकानि पदानि भवितुम् अर्हन्ति। यथा रूपरहितः स्पर्शवान् वायुः इति। वस्तुतः रूपरहितः स्पर्शवान् इति वायोः स्वरूपम्। वायोः लक्षणन्तु रूपरहितत्वे सति स्पर्शवत्त्वम् इति। सुन्दरम् सुगन्धवत् पुष्पम् इति पुष्पस्य स्वरूपम्। सुन्दरत्वे सति सुगन्धवत्त्वं पुष्पस्य लक्षणम्। एवं स्वरूपलक्षणयोः प्रकटने भेदः बोद्धव्यः। गन्धवती पृथिवी इति पृथिव्याः स्वरूपम्। गन्धवत्त्वम् पृथिव्याः लक्षणम्। एवं प्रकटने वैचित्र्यम् अवधेयम्।

**दलकृत्यम्** - लक्षणे यानि पदानि सन्ति तेषु एकैकमपि पदम् सार्थकम् न वा इति परीक्षा क्रियते। तदा एकैकम् पदम् लक्षणशरीरात् अपसार्य अवशिष्टांशः यदि लक्षणशरीरं तर्हि को दोषः जायेत इति परीक्ष्यते। दोषो जायते चेत् अपसारितं पदम् आनीय लक्षणशरीरे निवेश्य स्थितस्य लक्षणस्य परीक्षा क्रियते। उपस्थितः दोषः एवं पदनिवेशन अपगच्छति चेत् तत् पदं सार्थकम्। इत्थम् परीक्षया पदस्य सार्थक्यप्रदर्शनम् एव पदकृत्यं दलकृत्यं वा कथ्यते।



## पाठगतप्रश्नाः -३

२१. अनुभवः कः।

२२. संस्कारः कः।

२३. स्मृतिः का।

२४. ज्ञानस्य यो विषयः स किमिति कथ्यते।

२५. कीदृशः अनुभवः संस्कारं जनयति।

२६. कः समन्वयः।

२७. कः असाधारणधर्मः।

२८. का अव्याप्तिः।

२९. का अतिव्याप्तिः।

३०. कोऽसम्भवः।

---

## ५.५.६) उपलक्षणम् उपाधिः विशेषणं च।

वेदान्ते उपलक्षणम् उपाधिः विशेषणम् इति शब्दानां प्रयोगस्य प्राचुर्यम् अस्ति। अतः उपाधिः कः इति आदौ बोद्ध्यम्।

एकत्र बहूनि विविधवर्णयुक्तानि उत्पलानि सन्ति। तत्र चैत्रः नाम कश्चित् जनः मैत्राय 'उत्पलम् आनय' इति वदति। तदा तेषु यत्किमपि एकम् उत्पलम् आनयेत् मैत्रः। परन्तु यदि चैत्रः वदेत् यत् नीलम्



उत्पलम् आनय इति। तदा मैत्रः अन्यानि उत्पलानि विहाय केवलम् नीलम् एव उत्पलम् आनयति। रक्तादिभ्यः उत्पलेभ्यः नीलपदम् अत्र नीलम् उत्पलम् पृथक्कृत्य बोधयति। इदं पृथक्करणम् एव व्यावर्तनम् इति उच्यते। यः पदार्थः वस्तु धर्मः वा इत्थं व्यावर्तयति स व्यावर्तकः इति कथ्यते। व्यावर्तकः यस्मिन् आश्रितः भवति तेषाम् आश्रयाणां परस्परभेदानुमितिजनकः भवति। नीलम् उत्पलम् इत्यत्र नीलपदम् इतरेभ्यः रक्तादिभ्यः उत्पलेभ्यः भिन्नम् इति इतरेभेदानुमितिं जनयति इति तद् व्यावर्तकम्। व्यावर्तकम् व्यावृत्तिम् करोति। व्यावृत्तिः हि इतरभेदः।

उपलक्षणम् उपाधिः विशेषणम् इति एतत् त्रयमपि व्यावर्तकम् भवति।

### उपलक्षणम्

**अवर्तमानत्वे सति व्यावर्तकत्वम् उपलक्षणस्य लक्षणम्।** उपलक्षणम् लक्ष्ये न वर्तते। परन्तु व्यावृत्तिं करोति। काकैः गृहं पश्य इति वाक्ये काकाः उपलक्षणम्। यद्यपि काकाः गृहे न वर्तन्ते तथापि व्यावर्तने समर्थाः। यथा वा शाखायां चन्द्रः इत्युदारहणे शाखायाम् अविद्यमानमपि चन्द्रम् उपलक्षयति शाखा। अतः शाखा अत्र उपलक्षणम्।

### विशेषणम्

उपाधिः विशेषणं च लक्ष्ये वर्तेते एवञ्च व्यावृत्तिम् अपि कुरुतः। किञ्च यदा वर्तते तदा व्यावृत्तिं करोति। अर्थात् लक्ष्ये वर्तमानत्वे सति व्यावर्तकत्वम् उपाधिविशेषणयोः साधारणं लक्षणम् प्रतिभाति। इतोऽपि द्वयोः भेदः अस्ति।

लक्षणं किम् करोति। लक्षणम् एकस्य उद्देश्यस्य किमपि विधेयं बोधयति। यथा यत्र घटः ज्ञातः अस्ति परन्तु कीदृशः इति ज्ञातं नास्ति तदा घटः नीलः इति वाक्यम् घटम् उद्दिश्य नीलत्वम् विदधाति। अतः घटः उद्देश्यः नीलत्वम् च विधेयम्।

नीलः घटः नित्यः अनित्यो वा यो जानाति तं प्रति 'नीलो घटः अनित्यः' इति वाक्यम् उक्तम्। तस्मिन् घटः च उद्देश्यः, नीलत्वम् विशेषणम्, अनित्यत्वम् विधेयम् इति। तत्र यथा घटः अनित्यः तद्वत् तस्य नीलत्वम् अपि अनित्यम् इत्यपि बोधः जायते। नीलत्वम् उद्देश्ये घटे अन्वेति। उद्देश्यः यः घटः तस्य अनित्यत्वे अन्वयः (सम्बन्धः) भवति। एवञ्च नीलत्वस्य अपि अनित्यत्वे अन्वयः भवति। यतो हि नीलत्वमपि अनित्यम्।

अतः नीलत्वम् उद्देश्ये घटे अन्वेति। नीलत्वस्य स्वान्वितः घटः। घटस्य विधेयम् अनित्यत्वम्। नीलत्वम् स्वान्वितस्य घटस्य विधेये अन्वेति। अर्थात् नीलत्वम् स्वान्विताशं-विधेयान्वितम् अस्ति। नीलत्वम् घटे वर्तते। नीलत्वम् अमुम् घटम् इतरघटेभ्यः व्यावर्तयति। अतः नीलत्वे स्वान्वितांशविधेयान्विततत्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् अस्ति। अतः नीलत्वम् विशेषणम् भवति। इदमेव विशेषणस्य लक्षणम्। **स्वान्वितांशविधेयान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् इति विशेषणस्य लक्षणम्।**

### उपाधिः

कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। (शष्कुली हि कर्णविवरम्। नभः आकाशम्। अतः कर्णविवरावच्छिन्नम् आकाशम् श्रोत्रेन्द्रियम् इत्यर्थः। ) अनेन वाक्येन श्रोत्रत्वम् विधेयम्, नभः उद्देश्यम् इति ज्ञायते। तत्र कर्णशष्कुली उपलक्षणं वा विशेषणं वा उपाधिः वा इति विचार्यते।

सर्वम् आकाशम् न श्रोत्रम्। किन्तु कर्णविवरद्वारा यद् ज्ञायते तत् आकाशम् श्रोत्रम्। यथा घटाकाशम् मठाकाशम् इति प्रयोगेन एकमेव आकाशम् घटसम्बन्धवशात् मठसम्बन्धवशात् भिन्नं भिन्नं प्रतीयते। तथा कर्णशष्कुली अन्यस्माद् आकाशात् शष्कुलीसम्बन्धम् आकाशम् पृथक् कृत्वा बोधयति, व्यावर्तयति। अतः कर्णशष्कुली व्यावर्तनं करोति। एवञ्च केवलम् व्यावृत्तम् आकाशमेव श्रोत्रम्। कर्णशष्कुली न श्रोत्रम्। अतः विधेये श्रोत्रत्वे आकाशस्य अन्वयः (सम्बन्धः) अस्ति किन्तु कर्णविवरस्य अन्वयः नास्ति। कर्णशष्कुली न श्रोत्रम्। अतः कर्णशष्कुली वर्तते। कर्णशष्कुली वर्तमाना सती तया सम्बन्धितस्य आकाशस्य अन्यस्मात् आकाशात् व्यावर्तनं करोति। आकाशं व्यावृत्य श्रोत्रत्वस्य सम्बन्धयोग्यं करोति। किन्तु स्वस्य येन आकाशेन अन्वयः तस्मिन् आकाशे यद् विधेयं श्रोत्रत्वं, तस्मिन् नान्वेति। अतः कर्णशष्कुली आकाशस्य विधेये अनन्विता, किन्तु वर्तमाना सति आकाशस्य आकाशान्तराद् व्यावर्तिका। अतः कर्णशष्कुली आकाशस्य उपाधिः भवति, न तु विशेषणम्। तथाहि - **स्वान्वितांशविधेयानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् इति उपाधेः लक्षणम्।** अयेमव उपाधिविशेषणयोः भेदः यत् यस्य व्यावर्तनं कृतं तस्य विधेये विशेषणम् अन्वेति, उपाधिः नान्वेति। द्वयोरपि वर्तमानत्वे सति व्यावर्तकत्वम् तु अस्ति। तदेव सरलगिरा इत्थं प्रकट्यते - विशेषणं हि कार्यान्वयि व्यावर्तकं वर्तमानम्। उपाधिः हि कार्यानन्वयी व्यावर्तको वर्तमानश्च इति।

पण्डितपुत्रः मूर्खः इति उदाहरणे विधेयं मूर्खत्वम्, उद्देश्यः पुत्रः। पण्डितस्य पुत्रः। अतः पण्डितस्य स्वपुत्रे पुत्रत्वसम्बन्धेन अन्वयः भवति। पुत्रस्य मूर्खत्वेन अन्वयः भवति, किन्तु पण्डितस्य मूर्खत्वेन अन्वयः न भवति। पण्डितः न मूर्खः, पुत्र एव मूर्खः इति हेतोः। अतः स्वविशेष्यस्य विधेये अन्वयरहितः पण्डितः। अतः पण्डितः अत्र उपाधिः।

घटपटौ पश्य इत्यत्र घटस्य पटे अन्वयः अस्ति। एवञ्च पटस्य विधेया या दर्शनक्रिया तस्मिन् घटः अन्वेति। यतो हि घटोऽपि दर्शनस्य विषयः अस्ति। घटः तत्र वर्तमानः। अतः घटे वर्तमानत्वम् अस्ति। स्वान्वितः यः पटः तस्य विधेये अन्वयित्वम् अपि घटस्य अस्ति। घटः न पटस्य व्यावर्तकः। अतः लक्षणे यदि व्यावर्तकं पदं न स्यात् तर्हि घटः पटस्य विशेषणं भवेदिति आपत्तिः। अतः लक्षणे व्यावर्तकत्वं निवेश्यते।



## पाठगतप्रश्नाः -४

३१. कति व्यावर्तकानि।

३२. उपलक्षणलक्षणं किम्।



३३. विशेषणलक्षणं किम्।

३४. उपाधिलक्षणं किम्।

३५. पण्डितपुत्रः मूर्खः इत्युदाहरणे पण्डितः उपाधिः उपलक्षणं विशेषणं वा।

३६. कर्णशष्कुली आकाशस्य उपाधिः विशेषणम् वा।

३७. नीलो घटः अनित्यः इत्युदाहरणे नीलत्वम् उपाधिः विशेषणम् वा।

## ५.६) प्रमा

प्रमायाः करणम् प्रमाणम्। अतः प्रमा का इति जिज्ञासा।

ज्ञानमेव प्रमा। अतः **ज्ञानत्वम् प्रमायाः लक्षणम्**। तत्र को दोषः इति प्रदर्श्यते।

राहोः शिरः इति प्रसिद्धं वाक्यम्। अत्र राहोः तस्य शिरसः भेदः प्रकटितो भवति। परन्तु अनयोः न कोऽपि भेदः। वस्तुतः शिरः एव राहुः, राहुः एव शिरः। तयोः भेदः वस्तुतः नास्ति एव। परन्तु एवम् वाक्यव्यवहारः लोके भवति एव। अस्य व्यवहारस्य अपलापः, तिरस्कारः कर्तुं न शक्यः। अस्माद् वाक्याद् ज्ञानं जायते एव। अस्मिन् ज्ञाने यः भासते सोऽयं भेदः यद्यपि अलीकः, अप्रसिद्धः पदार्थः, अस्य अभावः केवलान्वयी वर्तते तथापि ज्ञानं तु भवति। यद्यपि ज्ञानस्य कोऽपि विषयः नास्ति तथापि ज्ञानम् अङ्गीकर्तव्यम्। इदं ज्ञानं योगशास्त्रे विकल्पज्ञानं कथ्यते। इदं ज्ञानं न प्रमा। अधुना यद्विषयकं ज्ञानम् उत्पद्यते स विषयः यदि परं बाधितः भवति तर्हि तद् ज्ञानं भ्रमः कथ्यते। यथा मन्दान्धकारे रज्जौ सर्पत्वं दृश्यते। परन्तु प्रकाशे आनीते तु रज्जौ रज्जुत्वम् एव गृह्यते न तु सर्पत्वम्। अतः रज्जौ सर्पत्वज्ञानं तु भ्रमः एव। राहोः शिरः इत्यत्र तु भेदस्य यदा ज्ञानं भवति तदा अपि भेदः अलीकः अस्ति, बाधितः अस्ति इत्यपि ज्ञानम् अस्ति। अतः बाधबोधसमये उत्पन्नं ज्ञानं न भ्रमः। एवं सत्यपि राहोः शिरः इति व्यवहारे न कस्यापि विमतिः अस्ति, न कस्यापि विसंवादः अस्ति। अतः एव तद् ज्ञानं भ्रमभिन्नं प्रमाभिन्नं तृतीयं ज्ञानम् इति अङ्गीकर्तव्यम्।

अतः एव ज्ञानत्वम् इत्येव यदि प्रमायाः लक्षणं स्यात् तर्हि उक्तप्रकारेण राहोः शिरः इति अस्मिन् अर्थशून्ये ज्ञाने ज्ञानत्वम् अस्ति। तेन अस्मिन् ज्ञाने प्रमालक्षणस्य अतिव्याप्तिः स्यात्। अतः **अर्थविषयकज्ञानत्वम् प्रमायाः लक्षणं** क्रियते। अर्थः, वस्तु विषयः यस्य तद् अर्थविषयकं ज्ञानम्। विकल्पज्ञानं न अर्थविषयकज्ञानम्। तत्तु अर्थशून्यं ज्ञानम्, अलीकस्य ज्ञानम्, वस्तुभूतस्य ज्ञानन्नास्ति। अतः विकल्पज्ञाने नास्य प्रमालक्षणस्य अतिव्याप्तिः।

रज्जौ सर्पत्वस्य ग्रहणम्, शुक्तौ रजतत्वस्य ग्रहणम् इत्यादिषु उदाहरणेषु यद् ज्ञानं जायते तस्य कश्चित् विषयः तु अस्ति एव। निर्विषयम् अथवा अर्थशून्यं ज्ञानं नास्तीदम्। अस्य ज्ञानस्य विषयः सर्पत्वरजतत्वादिः अग्रे बाधितो भवति। अतः इदं ज्ञानं भ्रमः कथ्यते। इदं ज्ञानम् अर्थविषयकं ज्ञानम्। अस्मिन् ज्ञाने अर्थविषयकज्ञानत्वस्य सत्त्वात् प्रमालक्षणस्य तत्रातिव्याप्तिः। अतः **अबाधितार्थविषयकज्ञानत्वं प्रमायाः लक्षणम्** क्रियते। रज्जौ सर्पत्वं शुक्तौ च रजतत्वं बाधितं भवति।



अतः तद् ज्ञानं बाधितार्थविषयकं ज्ञानम्। तस्मिन् ज्ञाने अबाधितार्थविषकज्ञानत्वं नास्ति। अतः नास्य प्रमालक्षणस्य तत्रातिव्याप्तिः।

घटानुभवः जातः। ततः तेन संस्कारः उत्पन्नः। परं कदाचित् स संस्कारः उद्बुद्धः सन् स्मृतिं जनयति। अत्र या स्मृतिः तस्याः विषयः घटः। स च घटः न बाधितः। यावद् घटः अस्ति तावद् घटः घटत्वेन एव प्रतीयते। अतः घटस्य बाधः न भवति। स्मृतिविषयः घटः बाधितः नास्ति। अतः अबाधितः अर्थः घटः। तद्विषया स्मृतिः। स्मृतिः ज्ञानम्। इदं ज्ञानम् अबाधितार्थविषयकम् अस्ति। अतः अबाधितार्थविषयज्ञानत्वस्य तत्र सत्त्वात् प्रमालक्षणस्य तत्रातिव्याप्तिः। अतिव्याप्तिनिराकरणाय लक्षणस्य परिष्कारः आवश्यकः। अतः नूतनं लक्षणं प्रस्तूयते। तद्धि **अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमायाः लक्षणम्**। यः अर्थः पूर्वं न ज्ञातः, न अधिगतः, सः अनधिगतः अर्थः। किञ्च यः अर्थः बाधितः नास्ति, सः अबाधितः अर्थः। अनधिगतार्थविषयकम्, अबाधितार्थविषयकं च ज्ञानं भवति अनधिगताबाधितार्थविषयकं ज्ञानम्। स्मृतिविषयः घटादिः तु पूर्वम् अनुभूतः एव। अर्थात् घटः स्मृतिपूर्वमेव अनुभवेन अधिगतः अस्ति। यः पूर्वं नानुभूतः तस्य स्मृतिः नैव भवति। अतः स्मृतिविषयः अधिगतः अस्ति, अनधिगतः नास्ति। अतः स्मृतौ अनधिगताबाधितार्थविषयकज्ञानत्वस्य असत्त्वात् नातिव्याप्तिः। स्मृतौ ज्ञानत्वं अस्ति, अर्थविषयज्ञानत्वम् अस्ति, अबाधितार्थविषकज्ञानत्वम् अस्ति, किन्तु अनधिगतार्थविषयकज्ञानत्वं नास्तीति अतिव्याप्तिः वारिता। अतः एव अव्याप्त्यतिव्याप्त्यसम्भवरूपदूषणत्रयरहितम् इदम् लक्ष्यायाः प्रमायाः असाधारणः धर्मः अपि अस्ति। अत एव **अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमायाः लक्षणम्** इति सिद्धम्।

केषाञ्चिन्मते स्मृतिरपि प्रमा एव। तदा उक्तस्य प्रमालक्षणस्य स्मृतौ अव्याप्तिः भवति। स्मृतौ अबाधितार्थविषयकज्ञात्वस्य सत्त्वेऽपि अनधिगतार्थविषयकज्ञानत्वस्य अविद्यमानत्वात् अव्याप्तिः। अत एव अव्याप्तिवारणाय **अबाधितार्थविषयज्ञानत्वं प्रमायाः लक्षणं** क्रियते। इदं स्मृतिसाधारणं लक्षणम्। स्मृतिविषयः अनुभवेन अधिगतः भवति, परन्तु यदि बाधितः नास्ति तर्हि तादृशार्थविषयकं ज्ञानं तु अबाधितार्थविषयकं ज्ञानम्। अतः स्मृतौ अबाधितार्थविषयकज्ञानत्वस्य सत्त्वात् नाव्याप्तिः।

सर्वाणि शास्त्राणि स्वसिद्धान्तानुकूलत्वेन प्रमेयाणि उपस्थापयन्ति। अतः अनुभूयमानस्य जगतः एव पदार्थाः विभिन्नैः नामभिः विभिन्नैश्च लक्षणैः प्रतिपाद्यन्ते। तदा शास्त्रेषु बहुत्र विरोधाः परिलक्ष्यन्ते। यदा किमपि शास्त्रम् कञ्चित् सिद्धान्तम् अभ्युपगच्छति तदा तस्मिन् बहवः दार्शनिकाः आक्षेपादिकं कुर्वन्ति। अतः तत्समाधानाय सिद्धान्तिना प्रयासो विधीयते। तत्र सर्वसम्मता परार्थानुमानपद्धतिः अवलम्ब्यते।

### नैयायिकानाम् आक्षेपः -१ तत्समाधिश्च

न्यायमते सर्वमपि ज्ञानं क्षणिकम्। अर्थात् एकक्षणस्थायि इति। धारावाहिकज्ञाने न्यायमते प्रथमं द्वितीयं तृतीयम् इत्यादिज्ञानमपि प्रमा। परन्तु द्वितीयतृतीयज्ञानादौ प्रोक्तलक्षणस्य अव्याप्तिः। तथाहि - धारावाहिकं ज्ञानम् - निरन्तरम् समानो घटः एव ज्ञानस्य विषयः भवति। अर्थात् प्रथमक्षणे द्वितीयक्षणे तृतीयक्षणे च समानम् घटं पश्यति तदा प्रथमक्षणे ज्ञातः अधिगतः घटः एव द्वितीयक्षणे ज्ञानस्य विषयः



भवति। एवं प्रथमक्षणे द्वितीयक्षणे च ज्ञातः अधिगतः घट एव तृतीयक्षणे ज्ञानस्य विषयः भवति। प्रथमक्षणे यद् घटज्ञानम् तस्मिन् तु प्रोक्तं प्रमालक्षणम् समन्वेति। परन्तु द्वितीयक्षणे यद् ज्ञानम् तत्र अव्याप्तिः भवति। यतो हि द्वितीयक्षणे ज्ञानस्य विषयः घटः अनधिगतः नास्ति, स तु प्रथमक्षणे अधिगतः अस्ति। अतः द्वितीयतृतीयादिज्ञानेषु अनधिगतार्थविषयकत्वं नास्ति, केवलम् अबाधितार्थविषयकत्वम् अस्ति। अतः लक्षणस्य अव्याप्तिः इति आक्षेपः।

विशेषणभेदे विशिष्टं भिद्यते। अर्थात् गतिमान् जनः इति ज्ञाने गतिः विशेषणम् अस्ति, जनः च विशेष्यः अस्ति। यदि परक्षणे स जनः गतिविरामं करोति तदा स्थितिवान् जनः इति ज्ञानम् उत्पद्यते। तस्मिन् स्थितिः विशेषणम् अस्ति, जनः विशेष्यः अस्ति। गतिमान् जनः, स्थितिमान् जनः इति अनयोः ज्ञानयोः विषयौ भिन्नौ। विशेष्यः जनः स एव तथापि विशेषणं भिन्नम् अस्ति। अतः विषयद्वयं भिन्नमेव गण्यते सर्वैरपि।

अधुना घटं पश्यामि, अधुना शब्दं शृणोमि, अधुना घटं स्पृशामि इत्यादिप्रत्यक्षं सर्वेषां भवति। तत्र अधुना घटं पश्यामि इत्यत्र न केवलं घटः भासते अपि तु कालोऽपि भासते। यदि कालो न भासेत, कालः ज्ञानविषयः न भवति तर्हि एतत्कालवृत्तिघटविषयकज्ञानवान् अहम् इति अनुव्यवसाये कालः विशेषणत्वेन न प्रतीयेत। (प्रथमज्ञानस्य ज्ञानम् अनुव्यवसायः। ज्ञानविषयकं ज्ञानम् अनुव्यवसायः।) अपि च घटः वर्तमानः न वा इति घटस्थितेः कालस्य ज्ञानमपि न भवेत्। परन्तु घटस्य वर्तमानत्वं तु ज्ञायते। क्रियायाः कालविषये न कस्यापि सन्देहो भवति। अतः कालस्तु ज्ञाने भासते इति अभ्युपगन्तव्यमेव। येन केनापि इन्द्रियेण यदा ज्ञानं भवति तदा अधुना इदम् अनुभवामि इति ज्ञानं भवति। अतः कालः सर्वेन्द्रियग्राह्यः।

अतः धारावाहिकज्ञाने प्रथमक्षणविशिष्टः घटः इति प्रथमज्ञानस्य विषयः। तदा द्वितीयक्षणः नास्ति। अतः प्रथमज्ञाने द्वितीयक्षणः न भासते। एवं तृतीयक्षणः अपि न भासते। द्वितीयज्ञाने द्वितीयक्षणविशिष्टः घटः ज्ञानस्य विषयः भवति। तदा तृतीयक्षणः नास्ति। अतः तस्मिन् तृतीयादिक्षणाः न भासन्ते। प्रथमज्ञाने प्रथमक्षणः विशेषणम् अस्ति, द्वितीयक्षणः विशेषणं नास्ति। द्वितीयज्ञाने द्वितीयक्षणः विशेषणम् अस्ति, प्रथमक्षणः विशेषणं नास्ति। अतः प्रथमज्ञानस्य विषयः द्वितीयज्ञानस्य विषयाद् भिन्नः। द्वितीयज्ञानस्य विषयः प्रथमज्ञानस्य विषयाद् भिन्नः। प्रतिक्षणं तत्तत्क्षणविशिष्टः घटः अर्थः अनधिगतः एव अस्ति, न तु अधिगतः। एवम् धारावाहिकज्ञानेऽपि प्रतिक्षणं विषयः अनधिगतः अस्ति। अतः अनधिगतार्थविषयकत्वम् अबाधितार्थविषयकत्वं च ज्ञाने वर्तते इति न अव्याप्तिः इति प्रथमं समाधानम्।

द्वितीयं समाधानं तु मधुसूदनसरस्वतीकृतमस्ति। धारावाहिकज्ञानस्थले द्वितीयादिज्ञानं तु ज्ञातस्य अर्थस्य ज्ञापकमात्रम्। अतः अनुवादमात्रम्। न तु अज्ञातस्य ज्ञापकम्। अज्ञातस्य ज्ञापिका खलु प्रमा। अतः अनुवादे प्रमात्वस्य प्रयोजकम् अज्ञातज्ञापकत्वं नास्ति। अतः द्वितीयादिज्ञानं प्रमा नास्ति। अतः तत्र लक्षणागमनम् युक्तमेव।



### नैयायिकानाम् आक्षेपः -२ तत्समाधिश्च

शुक्तेः रजतरूपेण भानं, रज्जोः सर्परूपेण भानं तु लोके प्रसिद्धमेव। शुक्तेः अज्ञानावृतः अंशः रजतत्वेन प्रतीयते। रज्जोः अज्ञानावृतः अंशः सर्पत्वेन प्रतीयते। एवम् ब्रह्मणः अज्ञानावृतान् विभिन्नान् अंशान् बद्धपुरुषः घटपटादिरूपेण गृह्णाति। अतः यथा सर्पादिकं मिथ्या तथा इदं परिदृश्यमानं जगद् अपि मिथ्या।

शुक्तित्वसाक्षात्कारेण रजतत्वस्य विलोपः भवति। प्रौढप्रकाशे रज्जुत्वसाक्षात्कारेण सर्पत्वस्य विलोपः भवति। रजतत्वादिकं बाधितम् भवति। तथा श्रवणमननादिना ब्रह्मसाक्षात्कारे सर्वं खल्विदं ब्रह्म (छा.उ. ३.१४.१) इत्याकारकं ज्ञानम् उत्पद्यते। तदा घटपटादीनाम् विलोपः भवति। घटादिकं बाधितम् भवति। तदा ब्रह्मचैतन्यं प्रकाशते। तत्र अन्यद् वस्तु न विद्यते। अयं वेदान्तसिद्धान्त एव।

अमुं सिद्धान्तम् आश्रित्य नैयायिकः आक्षिपति यत् वेदान्तमते तु घटादिकं मिथ्या अर्थात् ब्रह्मज्ञानेन बाधितं भवति। अतः घटज्ञानं तु बाधितार्थविषयकं ज्ञानम्। अतः घटादिविषयकं ज्ञानम् यद्यपि अनधिगतार्थविषयकं स्यात् तथापि अबाधितार्थविषयकं नास्ति। अतः घटादिविषयकज्ञाने प्रमालक्षणस्य अव्याप्तिः।

सिद्धान्ती समाधत्ते - सत्यम्। परन्तु अबाधितार्थविषयकं ज्ञानम् इत्यत्र संसारदशायाम् अबाधितः अर्थः इति तात्पर्यम् अस्ति। घटादिकं संसारकाले न कस्यापि बाधितं भवति। ब्रह्मसाक्षात्कारानन्तरमेव बाधितं भवति। अतः प्रोक्तलक्षणे न कश्चिद्दोषः। स्पष्टप्रतिपत्तये इत्थं वक्तुं शक्यते यद् अनधिगतार्थविषयकं ज्ञानम्, एवञ्च संसारदशायाम् यः अबाधितार्थः तद्विषयकं ज्ञानम् एव प्रमा इति।

यथा एक एव चन्द्रः अस्ति तथापि चक्षुर्दोषवशात् द्वितीयचन्द्रस्य दर्शनं कस्यचित् भवति। यत्र चन्द्रे भेदः नास्ति तत्र चक्षुर्दोषकारणेन भेदानुभवः भवति।

ब्रह्मसाक्षात्कारानन्तरं घटादीनां बाधः भवति। तत्र श्रुतिः प्रमाणम् - यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येद् इत्यादि। (यदा ब्रह्मज्ञस्य पुरुषस्य समस्तप्रपञ्चः ब्रह्मरूपः तदा केन इन्द्रियेण कं विषयं पश्येत्। अर्थात् यत्र रज्जौ सर्पत्वस्य भासः भवति तत्र रज्जुदर्शनेन सर्पत्वादिकं न दृश्यते। तदा संसारदशायाम् ब्रह्मणि जगतः भासः भवति। परन्तु ब्रह्मदर्शनेन जगत् न दृश्यते। )

संसारदशायां घटादीनां बाधः न भवति। तत्र श्रुतिः प्रमाणम् - यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इति। (यदा वस्तुतः द्वैतं नास्ति तथापि अज्ञानवशात् द्वैतम् इव कल्पिताः भेदाः भवन्ति। तदा ब्रह्मभिन्नः जीवः जगत् कर्तृकर्मकारकफलादिरूपेण भिन्नं पश्यति।

इत्थम् एतावता प्रमालक्षणं किमिति ऊहापोहपुरःसरम् आलोचितम्।

अग्रे प्रमाणानि आलोचयिष्यन्ते।

[**विमर्शः** - अनधिगतार्थविषयकज्ञानत्वम् इति विशेषणं स्मृतौ अतिव्याप्तिवारणाय। अबाधितार्थविषयकज्ञानत्वम् इति विशेषणं भ्रमे अतिव्याप्तिवारणाय इति आलोचितमेव। वेदान्तमते तु अज्ञानस्य निवर्तकमेव ज्ञानं भवति। स्मृतिः भ्रमो वा अज्ञानस्य निवर्तनं न करोति। अतः स्मृतौ भ्रमे च



ज्ञानत्वं नास्त्येव। स्मृतिः भ्रमश्च अज्ञानवृत्तिः, न तु प्रमाणवृत्तिः। अद्वैतमते प्रमालक्षणन्तु अज्ञातार्थविषयकनिश्चयत्वम् इति। ]



## पाठगतप्रश्नाः -५

३८. राहोः शिरः इत्यत्र ज्ञानस्य विषयः कः।

३९. प्रमायाः परिष्कृतं लक्षणं किम्।

४०. येषां मते स्मृतिरपि प्रमा तेषां मते प्रमालक्षणं किम्।

४१. ज्ञानं क्षणिमेव इति केषां मतम्।

४२. विशेषणभेदेन विशिष्टं भिद्यते न वा।

४३. अधुना घटं पश्यामि इति ज्ञाने कालः भासते न वा।



## पाठसारः

इदं प्रमाणप्रकरणम्। प्रमाणप्रकरणस्य अयं प्रथमः पाठः। प्रमाणस्य आलोचनाय बहूनां पारिभाषिकपदानां ज्ञानम् आवश्यकं भवति। तेषां पदानां यथा अत्र काम्यते तथा उपस्थापनं प्रायः अन्यत्र पाठेषु न भवति। अतः अस्मिन् प्रमाणानां प्रथमे पाठे तादृशविषया बाहुल्येन संकलिताः सन्ति।

दर्शनशब्दे यो ल्युट् प्रत्ययः तस्य विभिन्नान् अर्थान् आदाय दर्शनशब्दस्य प्रमाणं प्रमाता प्रमेयम् प्रमा च इत्येते चतुर्धा अर्थाः भवन्ति इति आलोचितम्। शास्त्रं किं भवति। मर्त्यस्य नित्ये प्रवृत्तिम् उपदिशति विदधाति, अनित्ये निवृत्तिम् उपदिशति तत् शास्त्रम्।

विपुलानि दर्शनानि। दर्शनानाम् आस्तिकनास्तिकभेदेन विवरणमत्र पाठे प्रस्तुतमस्ति। दर्शनभेदेन प्रमाणभेदोऽपि परिलक्ष्यते। अतः कस्य दर्शनस्य कानि प्रमाणानि इति विषयः अस्मिन् पाठे संक्षेपेण प्रतिपादितः।

पुरुषार्थपरः पुरुषः। धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः। धर्मार्थौ गौणौ, काममोक्षौ मुख्यौ। कामः अनित्यः मोक्षः नित्यः। अतः मोक्षः परमः पुरुषार्थः। स च ब्रह्मज्ञानाद् भवति।

किं ज्ञानम् इति विषये व्यवहारे या भ्रान्तिरस्ति तामुन्मूल्य शास्त्रेषु ज्ञानम् किम् इति प्रतिपादितमस्मिन् पाठे। अनुभवस्मृतिभेदेन ज्ञानस्य द्वैविध्यम्। तत्र अनुभवः संस्कारं जनयति, संस्कारश्च उद्बुद्धः सन् स्मृतिं जनयति।

कस्यापि पदार्थस्य परिचयः तस्य लक्षणेन भवति। लक्षणम् असाधारणः धर्मः भवति। लक्षणे अव्याप्तिः अतिव्याप्तिः असम्भवः इति दोषत्रयं सम्भवति। ते दोषा अत्र पाठे उल्लिखिताः।

वेदान्ते उपलक्षणम् उपाधिः विशेषणम् इति शब्दानां प्रयोगस्य प्राचुर्यम् अस्ति। अतः एतेषामपि सविस्तरमालोचनमत्र दत्तमस्ति।

प्रमा इति स्थानतः वस्तुतः विषयस्य प्रारम्भः वर्तते। इतः पूर्वं सर्वमपि प्रस्तुत्यर्थमासीत्। अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमायाः लक्षणम् इति प्रतिपादितम्। यः अर्थः पूर्वं न ज्ञातः, न अधिगतः, सः अनधिगतः अर्थः। किञ्च यः अर्थः बाधितः नास्ति, सः अबाधितः अर्थः। अनधिगतार्थविषयकम्, अबाधितार्थविषयकं च ज्ञानं भवति अनधिगताबाधितार्थविषयकं ज्ञानम्। तत्त्वम् प्रमायाः लक्षणम्। एवम् सरलार्थं विव्रिय तत्र दलकृत्यम् अपि प्रदर्शितमस्ति। अस्मिन् लक्षणे ये दोषाः आक्षेपाः च स्युः तेषामपि निवारणं प्रदर्शितमस्ति।



## पाठान्तप्रश्नाः

१. दर्शनशब्दस्य व्युत्पत्तिभेदात् अर्थभेदान् उपस्थापयत।

२. किं शास्त्रम्।

३. दर्शनभेदान् प्रकटयत।

४. कस्य दर्शनस्य कानि प्रमाणानि इति लिखत।

५. पुरुषार्थं सयुक्ति विशदयत।

६. पुरुषार्थान् विव्रिय मोक्षस्य परमत्वम् प्रतिपादयत।

७. कः पदार्थः।

८. सामान्यतः ज्ञानं कथमुत्पद्यते।

९. लक्षणलक्षणं विव्रिताम्।

१०. लक्षणलक्षणदोषाः के। सलक्षणोदारणं प्रतिपाद्याः।

११. दलकृत्यं किम्।

१२. उपाधिलक्षणे व्यावर्तकत्वस्य सार्थक्यम् उपपादयत।

१३. उपलक्षणलक्षणं प्रदाय उपपादय।

१४. विशेषणलक्षणं प्रदाय उपपादय।

१५. उपाधिलक्षणं प्रदाय उपपादय।

१६. उपाधिविशेषणयोः भेदः कः।

१७. प्रमालक्षणं सदलकृत्यं परिष्कुरुत।

१८. कालः ज्ञाने भासते इति सयुक्ति प्रतिपादयत।



१९. धारावाहिकज्ञाने प्रतिक्षणं विषयः कथम् अनधिगतः।



## पाठगतप्रश्नानाम् उत्तराणि

१. दृशिः प्रेक्षणे इति धातोः ल्युट्-प्रत्यययोगेन दर्शनशब्दः निष्पद्यते।

२. ३

३. ४

४. १

५. ४

६. २

७. १-ग, २-घ, ३-ख, ४-क, ५-च, ६-ङ

-

८. सुखम्।

९. दुःखम्।

१०. नित्यानित्यभेदेन सुखं द्विविधम्।

११. आत्मसुखम्।

१२. जन्यसुखमनित्यम्।

१३. धर्मः पुण्यम् वा।

१४. अधर्मः पापम् वा।

१५. 'इदं मदिष्टसाधनम्' इति ज्ञानम् प्रवृत्तिं प्रति कारणं भवति।

१६. अर्थ्यते इति अर्थः। पुरुषस्य अर्थः पुरुषार्थः। अथवा पुरुषेण अर्थ्यते स पुरुषार्थः। अर्थात् पुरुषः नरो वा नारी वा यद् कामयते इच्छति अर्थयते स एव पुरुषार्थः।

१७. धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः।

१८. धर्मार्थौ गौणौ। मुख्यौ तु काममोक्षौ पुरुषार्थौ।

१९. नित्यत्वम्।

२०. मोक्षः ब्रह्मज्ञानाद् भवति।

-

२१. स्मृतिभिन्नं ज्ञानमनुभवः।

२२. अनुभवः अपेक्षाबुद्धिवशात् अन्तःकरणे तथा गुणमुत्पादयति यः उद्बोधकसहकारेण स्मृतिं जनयति स गुणः एव संस्कारः। अनुभवजन्यः स्मृतिहेतुः संस्कारः।

२३. बहिरिन्द्रियेण यद् ज्ञानं न जायते, किन्तु केवलं संस्कारः उद्बुद्धः सन् यद् ज्ञानं जनयति तद्



ज्ञानमेव स्मृतिः।

२४. ज्ञानस्य यो विषयः सः अर्थः पदार्थः ज्ञेयः ज्ञातव्यः प्रमेयः वा कथ्यते।

२५. अपेक्षाबुद्धिसहकृतः अनुभवः संस्कारं जनयति।

२६. लक्ष्ये लक्षणम् अस्ति चेत् लक्षणसमन्वयः कथ्यते।

२७. यस्मिन् धर्मे अव्याप्तिः अतिव्याप्तिः असम्भवः इति त्रयो दोषाः न भवन्ति स एव असाधारणः धर्मः।

२८. लक्ष्यैकदेशवृत्तित्वे सति लक्ष्यापरदेशावृत्तित्वम् अव्याप्तेः लक्षणम्।

२९. यावल्लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् अतिव्याप्तेः लक्षणम्।

३०. लक्ष्यमात्रावृत्तित्वम् असम्भवस्य लक्षणम्।

-

३१. उपलक्षणम् उपाधिः विशेषणम् इति एतत् त्रयमपि व्यावर्तकम् भवति।

३२. अवर्तमानत्वे सति व्यावर्तकत्वम् उपलक्षणस्य लक्षणम्।

३३. स्वान्वितांशविधेयान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् इति विशेषणस्य लक्षणम्।

३४. स्वान्वितांशविधेयानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम् इति उपाधेः लक्षणम्।

३५. उपाधिः।

३६. उपाधिः।

३७. विशेषणम्

-

३८. राहोः शिरः इत्यत्र ज्ञानस्य राहुशिरसोः भेदः यश्च अप्रसिद्धः पदार्थः अस्ति।

३९. अनधिगताबाधितार्थविषयकज्ञानत्वं प्रमायाः लक्षणम्।

४०. अबाधितार्थविषयज्ञानत्वं प्रमायाः लक्षणम्।

४१. न्यायमतम्।

४२. भिद्यते।

४३. भासते।

॥ इति पञ्चमः पाठः ॥



# ६

# प्रत्यक्षखण्डे प्रत्यक्षप्रमाणम्

## प्रस्तावना

पूर्वस्मिन् पाठे विषयः सुबोधः भवतु इति धिया नैके विषयाः उपस्थापिताः। प्रमा इति प्रमुखविषयः। का तावत् प्रमा इत्यालोचितमेव।

अस्मिन् पाठे प्रमायाः भेदान् उल्लिख्य तासु प्रथमा प्रत्यक्षप्रमा का इति उपस्थापयिष्यते। वृत्तिः इति वेदान्तस्य अपरो विशेषः। वृत्तिरपि अस्मिन्नेव पाठे विवृतास्ति। सन्निकर्षः, इन्द्रियाणां करणत्वम् , ज्ञानादयः कस्य धर्माः, चैतन्यस्य भेदाः, ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकम्, विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकम् इति विषया अस्मिन् पाठे अन्तर्भवन्ति। विषयः न्यायशैल्याम् लिखितः अस्ति। यद्यपि विषयः क्लिष्टः तथापि मुहुर्मुहुः पठनेन सुबोधः स्यात्। एवञ्च प्रथममेव सर्वोऽपि विषयः बुद्धौ आरूढः भवेत् इति न वक्तुं शक्यते। अतः यत्र विषयः नावगतः तत्र पठनस्य विरामम् अकृत्वा अग्रे पठनं नेयम्। कदाचित् स एव विषयः प्रकारान्तरेण अग्रे प्रतिपाद्यते। तदा तस्य ज्ञानं सुस्पष्टं भवितुम् अर्हति। बहुत्र एकस्य विषयस्य ज्ञानम् अपरविषयस्य ज्ञानेन स्पष्टं भवति। अत एव अग्रे पठनस्य पुनः पठनस्य चावश्यकता अस्ति।



## उद्देश्यानि

इमम् पाठं पठित्वा भवान् -

- वेदान्तमते प्रमाभेदान् जानीयात्।
- षड्विधप्रमासु प्रत्यक्षप्रमा का इति ज्ञास्यति।
- वृत्तिः का बोद्धुं समर्थः भवेत्।
- इन्द्रियार्थसन्निकर्षं बुध्यात्।
- ज्ञानं सुखं दुःखं धर्मः अधर्मः इत्यादयः कस्य धर्मा इति बुद्ध्यात्।
- ज्ञानगतं यत् प्रत्यक्षत्वं तस्य प्रयोजकं बुध्यात्।
- विषयगतं यत् प्रत्यक्षत्वं तस्य प्रयोजकं बुध्यात्।

## ६.१) प्रमाभेदाः

प्रमा षोढा - प्रत्यक्षप्रमा अनुमितिः उपमितिः शाब्दी अर्थापत्तिः अनुपलब्धिः चेति। प्रमाणानि च षडित्यपि पूर्वमेव उक्तम्। प्रत्यक्षम् अनुमानम् उपमानम् आगमः अर्थापत्तिः अनुपलब्धिः चेति एतानि षट् प्रमाणानि। तेषु प्रत्यक्षप्रमायाः करणम् प्रत्यक्षप्रमाणम्।



का तावत् प्रत्यक्षप्रमा। लक्षणघटकीभूतानां पदानाम् अर्थस्य ज्ञानेन एव लक्ष्यस्य ज्ञानं सम्भवति। यावत् प्रत्यक्षप्रमा का इति ज्ञायते तावत् प्रत्यक्षप्रमाणं न ज्ञातुं शक्यते। किञ्च अनुमानादीनि प्रमाणानि प्रत्यक्षप्रमाणे आश्रितानि। अतः प्रत्यक्षप्रमाणस्य ज्येष्ठत्वम् इति तदेव आदौ उपन्यस्यते।

प्रत्यक्षप्रमा का इति प्रतिपादनात् पूर्वं तत्सम्बद्धाः केचित् विषयाः स्पष्टीक्रियन्ते।

### प्रत्यक्षशब्दस्यार्थाः

प्रत्यक्षशब्दस्य प्रयोगः त्रिषु अर्थेषु क्रियते। प्रत्यक्षम् प्रमाणम्। प्रत्यक्षम् ज्ञानम्। प्रत्यक्षः विषयः। कदा कस्मिन्नर्थे प्रयोगः भवति इति तत्र तत्र सावधानं बोध्यम्।

### विषयः

जीवो ब्रह्म एव नापरः इति जीवब्रह्मैक्यम् वेदान्तस्य प्रतिपाद्यः विषयः। एतदैक्यज्ञानमेव मोक्षः कथ्यते, ब्रह्मज्ञानम् इति च कथ्यते। ब्रह्मणः किं स्वरूपम् इत्यपि जिज्ञासा सुतराम् उदेति। सत्यं ज्ञानम् अनन्तं ब्रह्म (तै.उ.) इत्यादिश्रुतिप्रमाणेन सच्चिदानन्दस्वरूपं ब्रह्म। अर्थात् सत्स्वरूपम् चित्स्वरूपम् आनन्दस्वरूपं च ब्रह्म। इतोऽपि बहुभिः प्रकारैः ब्रह्म प्रतिपाद्यते परन्तु तद्विषये सूक्ष्मविचारः अस्य पाठस्य विषयः नास्ति। अतः अत्र विस्तराद् विरम्यते।

### ब्रह्मस्वरूपम्

ब्रह्म एव चैतन्यम् उच्यते। अस्मिन् ब्रह्मणि सर्वं जगत् अध्यस्तम् अस्ति। यथा रज्जौ सर्पः अध्यस्तः भवति। यथा शुक्तौ रजतम् अध्यस्तम् भवति। यथा मरुमरीचिकायाम् मृगजलम् अध्यस्तम् भवति। तद्वत् चैतन्ये जगद् अध्यस्तम् अस्ति। अतः चैतन्यम् अधिष्ठानम् कथ्यते। यथा यदा रज्जौ सर्पत्वं प्रतीयते तदा स द्रष्टा तदानीं रज्जुं नैव पश्यति। रज्जुविषयकम् अज्ञानम् अस्ति। अधिष्ठानस्य रज्जोः यदा ज्ञानं भवति तदा सर्पत्वस्य विलोपः भवति। अतः अधिष्ठानज्ञानेन अध्यस्तस्य सर्वस्य विलोपः भवति। जगतः अधिष्ठानं यत् चैतन्यं, तस्य ज्ञानं भवति चेत् सर्वस्य जगतः विलोपः भवति। अर्थात् जगत् जगद्रुपेण न प्रतीयते। जगत् ब्रह्मरूपेण प्रतीयते। सर्व खल्विदं ब्रह्म इति श्रुतेः।

### सृष्टिक्रमेण अन्तःकरणस्य सावयवत्वम्

चैतन्यविषयकम् अज्ञानमेव जगतः सृष्टिं प्रति कारणं भवति। तत्र अन्तःकरणं जगत् शरीराणि इन्द्रियाणि विषयाः इत्यादिकं सर्वमपि अज्ञानाद् एव जायते। तस्माद्वा एतस्माद् आत्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः इति श्रुतेः (तै.उ. ब्र.व.१.१)। अतः अन्तःकरणमपि आकाशादीनाम् पञ्चानां तन्मात्राणां सात्त्विकांशेभ्यः मिलितेभ्यः उत्पद्यते। अतः तत् तैजसम् इति कथ्यते। अर्थात् रविकिरणवद् अति स्वच्छं प्रकाशकं लघु चरञ्च भवतीति। अतः अन्तःकरणम् जन्यः पदार्थः अस्ति। अन्तःकरणं परमाणुपरिमाणं नास्ति। अतः सावयवस्य अन्तःकरणस्य आकारपरिणामः सम्भवति। अत एव अन्तःकरणं वृत्तिरूपेण परिणमते इति अग्रे प्रतिपाद्यते।



अत्र श्रुतिप्रमाणम् - १) तन्मनोऽसृजत इति। (तत् ब्रह्म मनः अर्थात् अन्तःकरणम् असृजद् इत्यर्थः। ब्रह्मकर्तृकम् अन्तःकरणकर्मकं सर्जनम् इति यावत्। ) २) एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। (मु.उ. २.२) (प्राणो मनः सर्वाणि इन्द्रियाणि च ब्रह्मणः जायन्ते। ) ३) अन्नमसितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽनिष्ठस्तन्मनः इति। (छा.उ. ६.५.१) (अन्नात् मनः भवतीति तात्पर्यम्। )

### वृत्तिः

घटविषयकं चाक्षुषप्रत्यक्षं ज्ञानम् कथम् उत्पद्यते। यत्र सम्मुखे घटः स्थितः अस्ति तत्र अन्तःकरणम् चक्षुर्भ्याम् निर्गच्छति, घटाकारं च भवति।

तद्यथा तडागे स्थितं जलं छिद्रात् निर्गत्य कुल्यात्मना केदारान् प्रविश्य कुल्याकारं चतुष्कोणाद्याकारं भवति। अर्थात् जलं यावत् तडागे अस्ति तावत् तडागाकारं भवति। छिद्रेण तडागाद् बहिः निर्गच्छति। कुल्या अर्थात् प्रणाल्या केदारान् अर्थात् कृषिक्षेत्राणि गच्छति। यदा क्षेत्रं प्राप्नोति तदा यथा क्षेत्रं यदि त्रिकोणं स्यात् तर्हि जलमपि त्रिकोणाकारं भवति। यदि क्षेत्रं चतुष्कोणाकारं स्यात् तर्हि चतुष्कोणाकारं भवति। अर्थात् केदाराकारं भवति।

यथा वा - द्रोण्याम् गणेशमूर्तिः स्थापिता अस्ति। द्रोणी जलेन पूर्यते चेत् तद् जलं मूर्तिम् परितः व्याप्नोति, अन्तः मूर्तिः, बहिः जलम् इति स्थितिः भवति। तदा मूर्त्याकारं जलम् भवति इति न वक्तुं शक्यते, किन्तु मूर्तिं परितः जलमस्ति।

यथा वा द्रवीभूतः धातुः मूषानिषिक्तः मूषाकारः भवति।

अन्तःकरणमपि इन्द्रियद्वारा बहिः गत्वा घटादिविषयं परितः व्याप्नोति। तदा उच्यते यद् अन्तःकरणं घटादिविषयाकारं भवतीति। अन्तःकरणस्य अयं घटादिविषयाकारेण परिणामः हि वृत्तिः इति कथ्यते। अन्तःकरणं यदा यद्रूपेण वर्तते तदा तस्य तदाकारा वृत्तिः उच्यते। सा च वृत्तिः परिणामात्मिका। परिणामो हि विकारः। स च अवयवानाम् अन्यथात्वरूपः। परन्तु अन्तःकरणम् सावयवम् इति उक्तमेव। अतः सावयवस्य अन्तःकरणस्य परिणामः सुतराम् सम्भवति।

### गुणक्रियाद्याकारा वृत्तिः कथम्

घटादयः हि द्रव्याणि सन्ति। तदाकारम् अन्तःकरणं भवितुम् अर्हति। किञ्च घटादिविषयकं प्रत्यक्षं ज्ञानम् उत्पद्यते। एवञ्च गुणस्य क्रियायाः द्रव्यत्वगुणत्वादीनाम् च अपि प्रत्यक्षम् उत्पद्यते। गुणादीनां न कोऽपि स्वकीयः आकारविशेषः अस्ति। अतः कथम् अन्तःकरणं गुणाकारं क्रियाकारं वा भवेत्।

**समाधानम् - १ -** गुणादीनां तदाश्रयद्रव्यतः न अत्यन्तम् भेदः। य आकारः आश्रयद्रव्यस्य स एव आकारः गुणक्रियादीनाम् अपि बोद्ध्यः। अतः गुणाद्याकारम् अन्तःकरणं भवितुमर्हति।

**समाधानम् - २ -**



घटम् अहं न जानामि अर्थात् घटविषयकाज्ञानवान् अहम् इत्याकारकज्ञाने अज्ञानस्य अनुभवः भवति। अतः घटादिविषयाः अज्ञानेन आवृताः भवन्ति। यदा घटादितः अज्ञानावरणं निवर्तते तदा घटादिविषयकं ज्ञानम् उत्पद्यते।

यावत् घटादिविषयः अज्ञानावृतः वर्तते तावत् 'घटः अस्ति', 'घटं पश्यामि' इत्यादिव्यवहारः अन्तःकरणे न भवति। अतः इदम् अज्ञानमेव 'घटः अस्ति' इत्येवम् अस्तित्वादिव्यवहारस्य प्रतिबन्धकम् अस्ति। अन्तःकरणस्य येन इन्द्रियेण सम्बन्धः अस्ति तस्य इन्द्रियस्य यदा विषयेण सम्बन्धः भवेत् तदा अन्तःकरणस्य काचित् विशिष्टा अवस्था भवति यस्याम् अज्ञानं निवर्तते किञ्च घटः अस्ति इत्यादिव्यवहारः सम्भवति। अन्तःकरणस्य इयम् अवस्था अस्तित्वादिव्यवहारस्य प्रतिबन्धकम् यद् अज्ञानम् तस्य निवृत्तियोग्या अवस्था। अयम् अवस्थाविशेष एव वृत्तिः इति कथ्यते। अतः गुणादीनाम् अतीतानागतानां वा यद्यपि आकारः न स्यात् तथापि तदाकारा वृत्तिः अर्थात् तद्विषयकस्य अज्ञानस्य निवृत्तियोग्या अन्तःकरणस्य अवस्था भवितुम् अर्हति। सा अवस्था हि वृत्तिः।



## पाठगतप्रश्नाः -१

१. प्रमाभेदाः कति के च।

२. किं प्रमाणं ज्येष्ठम्।

३. प्रत्यक्षशब्दस्य प्रयोगः कतिषु केषु च अर्थेषु क्रियते।

४. अन्तःकरणम् सावयवं निरावयवं वा।

५. आकाशो नित्योऽनित्यो वा।

६. मनः कार्यमित्यत्र प्रमाणश्रुतिः का।

## ६.२) प्रत्यक्षप्रमा

घटम् अहं न जानामि अर्थात् घटविषयकाज्ञानवान् अहम् इत्याकारकज्ञाने अज्ञानस्य अनुभवः भवति। अतः घटादिविषयाः अज्ञानेन आवृताः भवन्ति। यदा घटादितः अज्ञानावरणं निवर्तते तदा घटादिविषयकं ज्ञानम् उत्पद्यते। अज्ञानं कदा निवर्तते। यदा प्रोक्तप्रकारेण वृत्तिः उत्पद्यते तदा घटादिविषयगतस्य अज्ञानस्य आवरणं निवर्तते। घटादिविषयः वस्तुतः घटादिविषयचैतन्यं कथ्यते। यदा आवरणं निवर्तते तदा इयं निवृत्तिः एव विषयचैतन्यस्य अभिव्यक्तिः कथ्यते। तद्यथा पटेन आवृतः घटः कदा अभिव्यक्तः भवति। यदा पटात्मकम् आवरणं निवर्तते तदा अभिव्यक्तः भवति। अर्थात् अज्ञानावरणस्य निवृत्तिरेव विषयस्य अभिव्यक्तिः। इत्थम् अभिव्यक्तम् विषयचैतन्यम् एव विषय-प्रमा कथ्यते। चैतन्यमेव प्रत्यक्षप्रमा। शुद्धम् अर्थात् उपाधिरहितम् चैतन्यम् न प्रमा।



### सन्निकर्षः

इन्द्रियस्य विषयेण सम्बन्धः भवति चेत् वृत्तिः उत्पद्यते। तया वृत्त्या विषयचैतन्यम् अभिव्यक्तं भवति। इन्द्रियविषययोः तादृशः सम्बन्धः एव सन्निकर्षः कथ्यते।

### इन्द्रियस्य करणत्वम्

**तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारलक्षणम्**। इन्द्रियं सन्निकर्षात्मकव्यापारद्वारा प्रत्यक्षप्रमां प्रति कारणम् भवति। प्रत्यक्षप्रमा इन्द्रियजन्या। यावत् सन्निकर्षः न भवति तावत् प्रमा न जायते। अतः प्रमाजनकः सन्निकर्षः। इन्द्रियस्य सम्बन्धः एव सन्निकर्षः। अतः सन्निकर्षः इन्द्रियजन्यः। एवं सन्निकर्षे इन्द्रियजन्यत्वम् अस्ति, इन्द्रियजन्यप्रमायाः जनकत्वम् अस्ति। अतः इन्द्रियजन्यत्वे सति इन्द्रियजन्यजनकत्वात् सन्निकर्षः व्यापारः भवति। व्यापारः इन्द्रियस्य अस्ति इति इन्द्रियं व्यापारवद्। अपि च इन्द्रियं प्रमां प्रति कारणमपि अस्ति। अतः इन्द्रियं व्यापारवद् असाधारणं कारणम्। अतः इन्द्रियं प्रमां प्रति करणमिति सिद्धम्। प्रमायाः करणं प्रमाणम्। अतः इन्द्रियं प्रत्यक्षप्रमां प्रति प्रमाणम्।

### अनादि चैतन्यं कथं प्रमा

चैतन्यम् तु अनादि अर्थात् अजन्यम् , उत्पत्तिरहितम्, यस्य आदिः नास्ति तद्। प्रमा च उत्पद्यते। चैतन्यमेव प्रमा इत्युक्तम्। प्रमायाः करणम् प्रमाणम्। करणम् तु कारणविशेषः। अतः यस्य कारणम् अस्ति सा प्रमा सादिः अर्थात् जन्या, उत्पद्यते। प्रमा च चैतन्यम्। अतः कथम् सादिः प्रमा एव अनादि चैतन्यम् इति। किञ्च यदि अनादि चैतन्यं तर्हि तस्य किमपि करणं नैव सम्भवतीति उदेति प्रश्नः। तत्रोच्यते यद् यद्यपि विशेष्यम् अनादि तथापि तस्य विशेषणं यदि सादि तर्हि तेन विशेषणेन विशिष्टं तद् विशेष्यमपि सादि कथ्यते। प्रकृते च इन्द्रियार्थसन्निकर्षेण अन्तःकरणवृत्तिः उत्पद्यते। तस्यां वृत्तौ विषयचैतन्यम् अभिव्यक्तम् भवति। वृत्तिः सादिः। अतः वृत्त्यभिव्यक्तचैतन्यम् अपि सादि, आदिमत्, जन्यं कथ्यते। तद्यथा घटो नीलः क्रियते इत्यादौ नीलावच्छिन्नघटः विशेष्यीभूतः। स प्रागुत्पन्न एव। यदा स नीलः क्रियते तदा सः अजन्यः एव। तथापि विशेषणीभूतस्य नीलगुणस्य तदानीम् उत्पत्तिः भवति। अतः नीलावच्छिन्नः घटः अपि उत्पद्यते इति उच्यते। तद्वत् वृत्तिविशिष्टचैतन्यम् अजन्यम्। तथापि तदवच्छेदकवृत्तिः इन्द्रियार्थसन्निकर्षेण जन्यते। अतः तदवच्छिन्नं चैतन्यमपि जन्यम् उच्यते।

### वृत्तौ ज्ञानत्वोपचारः

सिद्धान्ते वृत्तिरेव ज्ञानम्। परन्तु ज्ञानं चैतन्यम्। वृत्तिश्च अन्तःकरणपरिणामः जडा। कथं वृत्तिरेव प्रमा। कथं चैतन्यं जडम्। किञ्च सिद्धान्ते इन्द्रियम् एव प्रमाणम्। करणस्य व्यापारात् अव्यवहितोत्तरम् वृत्तिः उत्पद्यते। सा वृत्तिः इन्द्रियाद् बहिः गच्छति, विषयेण च संसृष्टा सती विषयचैतन्यम् अभिव्यनक्ति। इदं करणं प्रमाकरणम्। प्रमा च अभिव्यक्तं चैतन्यम्। अतः इदं करणं तु वृत्तिं प्रति करणं, न तु प्रमां प्रति। यतो हि करणव्यापाराद् अव्यवहितोत्तरं यदुत्पद्यते तत् प्रति एव तस्य करणत्वम्।



अभिव्यक्तस्य प्रमाचैतन्यस्य वृत्तिः उपाधिः। इयम् वृत्तिः प्रमाचैतन्यम् अन्यचैतन्यात् व्यावर्तयति। अतः वृत्तिः प्रमाचैतन्यस्य अवच्छेदिका भवति। अतः वृत्तिः हि चैतन्यरूपज्ञानस्य अवच्छेदिका। इयं वृत्तिः चैतन्ये अभेदेन अध्यस्ता सती प्रमात्वं प्राप्नोति। अतः वृत्तौ प्रमात्वस्य सत्त्वात् वृत्तिः प्रमा अर्थात् ज्ञानम् इति व्यवहारः भवति। वृत्तिश्च चक्षुरादीन्द्रियस्य व्यापाराद् अव्यवहितोत्तरम् उत्पद्यते। अतः इन्द्रियम् वृत्तिं प्रति करणं भवति। वृत्तौ ज्ञानत्वस्य उपचारः भवति। अतः प्रमां प्रति इन्द्रियं करणं भवतीति इन्द्रियं प्रमाणम् इति सिध्यति। वृत्तौ ज्ञानत्वस्य व्यवहारः गौणत्वेन, अध्यासवशात् भवति।

न्यायमते ज्ञानम् गुणः। तद् समवायेन आत्मनि वर्तते। परन्तु वेदान्तनये प्रमात्मकं ज्ञानम् तु चैतन्यम्। अपि च उपचारात् वृत्तिरेव प्रमा उच्यते। वृत्तिस्तु मनोधर्मः, अन्तःकरणधर्मः, न तु आत्मधर्मः। तथाहि श्रुतिः - कामः सङ्कल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव इति। (अर्थः - कामः (इच्छा), सङ्कल्पः (शुक्लनीलादिभेदे विषयविकल्पः, अनेन कर्मणा इष्टं फलं साध्यते इत्येव विषया बुद्धिः), विचिकित्सा (संशयः), श्रद्धा (आस्तिक्यबुद्धिः, वेदादिशास्त्रेषु दृढविश्वासः), अश्रद्धा (अनास्तिक्यबुद्धिः, शास्त्रेषु अविश्वासः), धृतिः (धारणम्, इष्टवियोगे अनिष्टप्राप्तौ च अवैक्लव्यम् , देहादीनाम् अवसादहेतौ सति तेषाम् उत्तम्भनम्), अधृतिः (तत्र वैक्लव्यम्), ह्रीः (अकार्यप्रवृत्तिवशाद् अप्रतिभत्वम्, लोकलज्जा), धीः (बुद्धिः, वृत्तिः), भीः (भयम्) एतत् सर्वम् मन एव (अन्तःकरणमेव) परिणतिरूपा वृत्तिरेव। ) अतः इदं श्रुत्या प्रमाणितं यद् ज्ञानम् इच्छा इत्यादयः मनोधर्माः।

**ज्ञानादयः कस्य धर्माः**

अहं जानामि, अहम् इच्छामि इत्यादिप्रतीतिः समेषां मनुजानां भवति। तत्र अहं ज्ञानवान्, अहम् इच्छावान् इत्यादिः प्रत्यक्षानुभवः। एतेन अनुभवेन सिद्ध्यति यत् ज्ञानदिकम् आत्मधर्मः, न तु मनोधर्मः इति नैयायिकानाम् आक्षेपः।

**समाधानम् -** वस्तुतः वह्निः विविक्तः दहति। परन्तु तप्ते लौहपिण्डे स्पर्शेन दाहप्रतीतिः जायते तदा दग्धः वदति यत् लौहपिण्डः दहतीति। तत्रोच्यते - वह्निलौहपिण्डयोः तादात्म्याध्यासः अत्र कारणं भवति। वह्नेः दग्धृत्वधर्मः लौहपिण्डे आरोप्यते। एवमेव आत्मना अन्तःकरणस्य ऐक्याध्यासः भवति। तदा आत्मनि ज्ञानसुखादीनाम् अन्तःकरणधर्माणाम् आरोपः, अध्यासः भवति। अध्यासवशादेव अनुभवः 'अहं सुखी' इत्यादिः उपपद्यते।

अहं सुखी इत्याद्यनुभवे यथा सुखं विषयः भवति तथा अहंपदवाच्यम् अन्तःकरणमपि विषयः भवति। सुखं यथा प्रत्यक्षं तथा अन्तःकरणमपि प्रत्यक्षम् इति अङ्गीकर्तव्यम्। इन्द्रियविषयकं प्रत्यक्षज्ञानं न भवति। किन्तु अन्तःकरणं न इन्द्रियम्। अपि च तद् सावयवम् अस्ति। अतः अन्तःकरणस्य प्रत्यक्षम् भवति। अन्तःकरणस्य अनिन्द्रियत्वे श्रुतिः - इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः इति।

## ६.३) प्रत्यक्षत्वस्य प्रयोजकम्

**इन्द्रियजन्यत्वं** प्रत्यक्षत्वस्य प्रयोजकं चेत् अव्याप्तिदोषः - १



श्रोत्रं त्वक् चक्षुः जिह्वा (रसना) घ्राणम् एतानि पञ्च ज्ञानेन्द्रियाणि। यदि इन्द्रियस्य अर्थेन सह सन्निकर्षाद् उत्पन्नं ज्ञानं प्रत्यक्षम् इति मन्यते तदा एतैः पञ्चभिः इन्द्रियैः यद् ज्ञानं भवति तदेव प्रत्यक्षम् भवेत्। मनः तु न इन्द्रियम्। मनसा सुखादिकं ज्ञायते। तद् सुखादिविषयकं ज्ञानं प्रत्यक्षं न भवेत्। परन्तु वेदान्तमते सुखादीनाम् अपि प्रत्यक्षज्ञानं भवति। सुखादीनां प्रत्यक्षं न इन्द्रियजन्यम्। अतः अव्याप्तिः। प्रत्यक्षत्वस्य प्रयोजकं किम् इति प्रश्नः।

**इन्द्रियजन्यत्वं** प्रत्यक्षत्वस्य प्रयोजकं चेत् अव्याप्तिदोषः - २

किञ्च ईश्वरस्य ज्ञानमपि प्रत्यक्षम्, अर्थात् ईश्वरः यद् जानाति तत् सर्वं प्रत्यक्षमेव। परन्तु ईश्वरः सर्वज्ञः। तस्य ज्ञानं नित्यम्। तस्य ज्ञानं न उत्पद्यते। अतः इन्द्रियजन्यं नास्ति। यदि इन्द्रियजन्यत्वम् एव प्रत्यक्षत्वस्य प्रयोजकं तर्हि ईश्वरप्रत्यक्षे अव्याप्तिः भवति।

**इन्द्रियजन्यत्वं** प्रत्यक्षत्वस्य प्रयोजकं चेत् अतिव्याप्तिदोषः -

यद् इन्द्रियजन्यं तत् प्रत्यक्षम् इति इन्द्रियजन्यत्वं प्रत्यक्षत्वप्रयोजकं तर्हि अनुमितिः अपि इन्द्रियजन्या अस्ति। मनः सर्वज्ञानं प्रति कारणं भवति एव। यदि मनः इन्द्रियं तर्हि अनुमितिं प्रति अपि कारणं मनः। तर्हि अनुमितौ प्रत्यक्षत्वापत्तिः।

अतः प्रत्यक्षत्वस्य प्रयोजकं किमिति प्रश्नः।

### प्रत्यक्षशब्दस्य त्रिषु अर्थेषु प्रयोगः

प्रत्यक्षत्वं यस्मिन् तत् प्रत्यक्षम् इति। प्रत्यक्षशब्दस्य प्रयोगः त्रिषु अर्थेषु। यथा प्रत्यक्षा प्रमा, प्रत्यक्षः विषयः, प्रत्यक्षम् प्रमाणम् इति। प्रत्यक्षप्रमायाः करणत्वं हि प्रमाणगतस्य प्रत्यक्षत्वस्य प्रयोजकम्। तत् तु सुविदितमेव। अतः अत्र प्रमागतस्य प्रत्यक्षत्वस्य किञ्च विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकं किमिति प्रस्तूयते।

{**प्रयोजकम् -**

प्रयोजकशब्दस्य व्यवहारः बाहुल्येन भवति। अतः प्रयोजकं नाम किमिति बोद्धव्यम्।

अव्यवधानेन, साक्षात् कार्यजनकं कारणं भवति। परम्परया कार्यजनकं प्रयोजकम् भवति। कारणस्य कारणं प्रयोजकम्। यथा वेगेन प्रवहता वातेन वृक्षकम्पः जातः। वृक्षकम्पेन फलं विलग्नं भूमौ पतितम्। पतनात् भग्नम्। अत्र फलभङ्गं प्रति फलभूमिसंयोगः साक्षात् कारणम्। वातप्रवाहः, वृक्षकम्पः वा न साक्षात् भङ्गजनकः, अपि तु परम्परया। अतः वातप्रवाहः, वृक्षकम्पः वा अत्र परम्परया भङ्गजनकः इति फलभङ्गप्रयोजकः।}

इन्द्रियार्थसन्निकर्षजन्यज्ञाने एव प्रत्यक्षत्वं वर्तते, अन्यस्मिन् ज्ञाने नास्ति इति चेत् तत्र अन्यस्मिन् ज्ञाने कुतः प्रत्यक्षत्वं नास्ति इति जिज्ञासा उदेति। अर्थात् ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं किमिति।



प्रत्यक्षत्वस्य प्रयोजकम् इत्यस्य - 'इदं ज्ञानं प्रत्यक्षम्' इति व्यवहारस्य प्रयोजकम् इत्यर्थः। 'अयं विषयः प्रत्यक्षः' इति व्यवहारस्य प्रयोजकम् इत्यर्थः। 'इदं प्रमाणं प्रत्यक्षम्' इति व्यवहारस्य प्रयोजकम् इत्यर्थः।

तद्यथा चैत्रः प्रवासी इति व्यवहारः। अयं वाचिकव्यवहारः कदा सम्भवति। अर्थात् चैत्रगतस्य प्रवासित्वस्य प्रयोजकं किम्। चैत्रः यदा प्रवासं करोति तदा स प्रवासी भवति। अतः चैत्रगतं प्रवासित्वम्। तत् तदा एव सम्भवति यदा चैत्रः प्रवासं करोति। अर्थात् चैत्रस्य प्रवासकरणं चैत्रगतस्य प्रवासित्वस्य प्रयोजकम् भवति।

तद्वत् प्रकृतप्रकरणे इदं ज्ञानं प्रत्यक्षम्, अथवा अस्मिन् ज्ञाने प्रत्यक्षत्वम् अस्ति इति कदा वक्तुं शक्यते इति अत्र आलोच्यविषयः। अर्थात् **ज्ञानगतं प्रत्यक्षत्वं** विमृश्यते।

### विषयगतं प्रत्यक्षत्वम्

**प्रत्यक्षज्ञानविषयत्वं** प्रत्यक्षत्वस्य प्रयोजकम् इति लक्षणे अतिव्याप्तिदोषः-

प्रत्यक्षज्ञानविषयत्वं प्रत्यक्षत्वस्य प्रयोजकम् अर्थात् प्रत्यक्षज्ञानस्य विषयः प्रत्यक्षः इति उच्यमाने तत्र दोषः अस्ति। प्रत्यभिज्ञा अपि प्रत्यक्षं ज्ञानम्। तत्तेदन्तावगाहि ज्ञानं हि प्रत्यभिज्ञा। सोऽयं देवदत्तः इत्याकारकप्रत्यभिज्ञायाम् तत्ता हि स्मृतिविषयः, इदन्ता हि अनुभवः। तत्तांशस्य प्रत्यक्षं नास्ति तथापि तत्तांशः प्रत्यक्षज्ञानस्य विषयः।

**प्रत्यक्षज्ञानविषयत्वं** प्रत्यक्षत्वस्य प्रयोजकम् इति लक्षणे अव्याप्तिदोषः-

साक्षी प्रत्यक्ष एव अस्ति। परन्तु स कदापि प्रत्यक्षज्ञानस्य विषयः न भवति। अतः अव्याप्तिदोषः उद्भवति। प्रत्यक्षविषयत्वं न विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकम्।

प्रसङ्गात् साक्षी कः इति उच्यते।

### साक्षी

अन्तःकरणोपहितं चैतन्यं साक्षी इति कथ्यते। साक्षी सदा प्रकाशस्वभावः। साक्षी कदापि घटादिवत् ज्ञानस्य विषयो भूत्वा न प्रकाशते। साक्षी स्वयंप्रकाशः। कदापि अज्ञानावृतः न भवति।

साक्षी चेता केवलो निर्गुणश्च इति श्रुतिः। (श्वे.उ.६.११)। उदासीनत्वे सति बोद्धृत्वं साक्षिणः लक्षणम्। यदि उदासीनत्वमात्रम् एव साक्षिलक्षणं तर्हि इन्द्रियादौ अतिव्याप्तिः, तेषामपि जडतया उदासीनत्वात्। अतः बोद्धृत्वं निवेश्यते। तेन नातिव्याप्तिः। इन्द्रियादीनाम् जडत्वात् बोद्धृत्वाभावात्। यदि उदासीनत्वपदानुपादाने बोद्धृत्वमात्रं साक्षिलक्षणं भवति। तदा जीवे अतिव्याप्तिः। जीवस्यापि बोद्धृत्वात्। अतः उदासीनत्वं विशेषणम् उपादीयते। तेन नातिव्याप्तिः। जीवस्य उदासीनत्वाभावात्। जीवः कर्ता भोक्ता इत्यादिरूपेण सक्रियः अस्ति न तु उदासीनः।

### त्रिविधं चैतन्यम्

ज्ञानगतस्य विषयगतस्य च प्रत्यक्षत्वस्य प्रयोजकं किम् इति प्रतिपादने उपाधिवशात् चैतन्यस्य भेदाः कल्प्यन्ते। तद्विषयकं सुस्पष्टं ज्ञानम् आवश्यकमिति अधः तदेव प्रस्तूयते।



वृत्तिः का इति पूर्वं निरूपिता। अन्तःकरणस्य विषयाकारः परिणामविशेषः अथवा अवस्थाविशेषः वृत्तिः। अनया वृत्त्या अवच्छिन्नं चैतन्यम् हि प्रमाणचैतन्यम्। तदेव वृत्त्यवच्छिन्नचैतन्यं, **प्रमाणचैतन्यम्** , प्रमाणम् इति एतैः शब्दैः व्यपदिश्यते।

यः घटादिः ज्ञानस्य विषयः भवति, तदवच्छिन्नं चैतन्यं विषयावच्छिन्नचैतन्यं, विषयचैतन्यं, विषयः इति शब्दैः व्यपदिश्यते। तदेव **प्रमेयचैतन्यम्** इत्यप्युच्यते।

अन्तःकरणस्य यावान् अंशः विषयाकारः परिणामः नास्ति, तेन अन्तःकरणांशेन अवच्छिन्नं चैतन्यम् अन्तःकरणावच्छिन्नचैतन्यं, **प्रमातृचैतन्यं**, प्रमाता इति शब्दैः व्यपदिश्यते।

**चैतन्यं तु एकमेव। कथं तर्हि तस्य त्रैविध्यम्।**

उपाधिभेदात् चैतन्यस्य भेदः कल्प्यते। यथा घटावच्छिन्नः आकाशः घटाकाशः कथ्यते। मठावच्छिन्नः आकाशः मठाकाशः कथ्यते। यदा घटः मठात् बहिः वर्तते तदा द्वौ अवच्छिन्नौ आकाशौ प्रतीयेते। अत्र आकाशे कोऽपि भेदः नास्ति। तत्र केवलं कल्पितः भेदः अस्ति। आकाशस्य उपाधिः घटादिः नष्टः चेत् एक एव आकाशः अवशिष्यते।

एवम् अन्तःकरणं वृत्तिः विषयः इत्यादिभिः उपाधिभिः चैतन्यस्य सम्बन्धवशात् इदम् अन्तःकरणावच्छिन्नचैतन्यम्, इदं वृत्त्यवच्छिन्नचैतन्यम्, इदं विषयावच्छिन्नचैतन्यम् इति व्यवहारः उपपद्यते। चैतन्यस्य एवं भेदः कल्पितः एव न तु वास्तविकः। चैतन्ये स्वगत-सजातीय-विजातीय-भेदाः न सन्तीति हि सिद्धान्तः।

चैतन्येन सह सम्बन्धवशात् चैतन्ये स्वस्य धर्मस्य आरोपं कृत्वा चैतन्ये भेदम् उत्पादयति स हि उपाधिः।

शुक्तिविषयकम् अज्ञानं दूरदेशे स्थितायाः शुक्तेः विशेषांशं शुक्तित्वम् आवृणोति। ततः दोषेण अज्ञानं रजतत्वेन विपरिणमते। अज्ञानं च शुक्तेः सामान्यांशे अभेदेन आश्रितं भवति। तदा शुक्तिः शुक्तित्वेन न प्रकाशते। किन्तु रजतत्वेन प्रकाशते।

एवमेव विश्वव्यापकम् अज्ञानं चैतन्यम् आवृणोति। ततः दोषेण अज्ञानं घटादिरूपेण परिणमते। अज्ञानं चैतन्ये अभेदेन आश्रितं भवति। तदा चैतन्यं चैतन्यत्वेन न प्रकाशते। किन्तु घटादिरूपेण प्रकाशते।

यदा अज्ञानस्य परिणामः घटपटादिविषयः चैतन्ये अभेदेन आश्रितो भवति तदा विषयः चैतन्यस्य उपाधिः, अवच्छेदको वा भवति। किञ्च तदा स विषयः घटावच्छिन्नचैतन्यं, पटावच्छिन्नचैतन्यम् इत्यादिरूपेण अभिन्नेऽपि चैतन्ये काल्पनिकं भेदं जनयति।

इति त्रिविधं चैतन्यम् इति प्रतिपादितम्।



## पाठगतप्रश्नाः -२



७. प्रत्यक्षप्रमा का।

८. सन्निकर्षः कः।

९. व्यापारलक्षणं किम्।

१०. इन्द्रियस्य करणत्वे को व्यापारः।

११. करणलक्षणं किम्।

१२. वृत्त्यात्मकं ज्ञानं कस्य धर्मः।

१३. कामः धृतिः इच्छा इत्यादयः कस्य धर्माः।

१४. ज्ञानेद्रियाणि कति कानि च।

१५. मन इन्द्रियं न वा।

१६. मनसः अनिन्द्रियत्वे प्रमाणं श्रुतिम् लिखत।

१७. ईश्वरः अनुमिनोति न वा।

१८. का प्रत्यभिज्ञा।

१९. साक्षी कः।

२०. प्रमाणचैतन्यम् किम्।

२१. प्रमातृचैतन्यं किम्।

## ६.३.१) ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकम्

ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं किमिति आलोच्यते इतः परम्।

**प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेदः** हि ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकम्। विषयावच्छिन्नचैतन्याभिन्नप्रमाणचैतन्यत्वम् इत्यर्थः। अर्थात् यदा विषयावच्छिन्नचैतन्यस्य प्रमाणचैतन्येन अभेदः भवति तदा तत्र यद् ज्ञानम् उत्पद्यते तत् प्रत्यक्षं ज्ञानम् इति।

तद्यथा - घटः मठाद् बहिः अस्ति तदा घटावच्छिन्नः आकाशः मठावच्छिन्नाद् आकाशाद् भिन्नः भवति। यदा तु घटः मठे स्थाप्यते तदा घटाकाशः मठाकाशाद् भिन्नः नास्ति। यः घटाकाशः स मठाकाशः भवति एव। यद्यपि यः मठाकाशः स घटाकाशः इति नास्ति। तथापि सर्वः घटाकाशः मठाकाशः अस्ति एव। घटः मठः च आकाशस्य द्वौ उपाधी। तदा आकाशः च उपहितः कथ्यते, अथवा उपधेयः इत्यपि कथ्यते। उपाधिद्वयम् एकदेशे अस्ति चेत् उपहितस्य (उपधेयस्य) आकाशस्य अभेदः भवति।



एवमेव यदा विषयचैतन्यं प्रमाणचैतन्यं च एकदेशे भवति तदा उपहितं चैतन्यद्वयं भिन्नं न तिष्ठति, तयोः चैतन्ययोः अभेदः भवति।

यदा विषयः बाह्यः तदा तेन विषयेण (अर्थेन) सह इन्द्रियस्य सन्निकर्षः भवति चेद् वृत्तिः विषयदेशं गच्छति। यदा वृत्तिः विषयदेशं गच्छति तदा उपाधिद्वयम् एकदेशस्थं भवति।

अयं घटः इति प्रत्यक्षज्ञानस्थले विषयः घटः, स च बाह्यः, अन्यदेशस्थः च। इन्द्रियस्य अर्थेन सह सन्निकर्षवशात् अन्तःकरणम् इन्द्रियद्वारेण बहिः गच्छति, घटदेशस्थं भवति। एवञ्च तस्य घटाकारेण परिणामः भवति। तदा घटाकारा वृत्तिः भवति, तद्देशस्था च इयम्। इयं वृत्तिरेव प्रमाणम्। तदवच्छिन्नं चैतन्यम् प्रमाणचैतन्यम्। यदा घटाकारा वृत्तिः भवति तदा घटावच्छिन्नचैतन्यस्य प्रमाणचैतन्येन अभेदः भवति। तदा 'अयं घटः' घटविषयकं प्रत्यक्षम् ज्ञानम् उत्पद्यते।

घटः मठे अस्ति अर्थात् द्वयोः एकदेशस्थत्वम् अस्ति चेत् घटाकाश-मठाकाशयोः ऐक्यं भवति। अयं घट इति ज्ञानस्थले घटः चैतन्यस्य उपाधिः, वृत्तिः चैतन्यस्य उपाधिः। यदा वृत्तिः घटाकारा भवति, अर्थात् घटः वृत्तौ अस्ति, अर्थात् घटस्य वृत्तेश्च **एकदेशस्थत्वम्** अस्ति तदा उपधेयस्य चैतन्यद्वयस्य अभेदः भवति। घटः भूतले अस्ति, वृत्तिः भूतले नास्ति, वृत्तिः घटाकारा, घटम् आश्रित्य अस्ति। अतः उपाधिद्वयं यद्यपि एकदेशे नास्ति। तथापि वृत्तिः विषयाकारा भवति तदा विषयः वृत्तिः च इति उपाधिद्वयमपि एकदेशस्थम् इति व्यवहारः क्रियते।

### अनुमितिस्थले प्रत्यक्षत्वम्

पर्वतो वह्निमान् धूमात् इत्यादिकम् अनुमानस्थलम्। तत्र पर्वतो वह्निमान् इति अनुमितिः जायते। अनुमितिः परोक्षं ज्ञानम्, न तु प्रत्यक्षं ज्ञानम्। अत्र पर्वतः वह्निः, तयोः सम्बन्धः एतत्सर्वं भासते। यतो हि पर्वतस्य इन्द्रियेण सन्निकर्षः भवति, वह्नेः न भवति। वृत्तेः बहिः गमनस्य हेतुः हि इन्द्रियस्य अर्थेन सह सन्निकर्षः। स च सन्निकर्षः पर्वतेन सह अस्ति, वह्निना सह नास्ति। अतः पर्वताकारा वृत्तिः भवति, वह्न्याकारा न भवति। विषयः हि पर्वतः, स उपाधिः। वृत्तिरपि उपाधिः। उपाधिद्वयम् एकदेशे अस्ति। अतः उपधेययोः चैतन्ययोः अभेदः भवति। परन्तु वह्निस्थले तथा एकदेशस्थत्वं नास्ति। अतः पर्वतो वह्निमान् इति स्थले पर्वतविषयं प्रत्यक्षं ज्ञानम् उत्पद्यते, वह्निविषये तु परोक्षं ज्ञानम् उत्पद्यते।

### ज्ञानानाम् प्रत्यक्षम् , तेषां विषयाणां प्रत्यक्षत्वं परोक्षत्वं वा।

प्रत्यक्षम्, अनुमितिः उपमितिः शाब्दम् अर्थापत्तिः अनुपलब्धिः इति एतानि षड्विधज्ञानानि वेदान्तमते। तेषाम् करणमपि षड्विधम्। तथाहि - प्रत्यक्षम् , अनुमानम् , उपमानम् , आगमः (शब्दः), अर्थापत्तिः, अनुपलब्धिः इति।

सर्वाणि ज्ञानानि प्रत्यक्षेण ज्ञायन्ते। अर्थात् एतज्ज्ञानविषयकाणि ज्ञानानि प्रत्यक्षाणि, साक्षात् साक्षिवेद्यानि सन्ति। परन्तु तेषु प्रत्यक्षज्ञानस्य विषयः घटादिः अपि प्रत्यक्षः अस्ति, अनुमितौ भासमानः वह्न्यादिविषयः न प्रत्यक्षः। स तु अनुमेयः, परोक्षः। एवम् अन्येषु ज्ञानेषु। अतः एव यदा घटादिविषयकं



ज्ञानं जायते तज्ज्ञानं घटांशे प्रत्यक्षम् इति कथ्यते। ज्ञानविषयकं ज्ञानं सदा प्रत्यक्षं किन्तु प्रत्यक्षज्ञानस्य विषयः एव प्रत्यक्षः, अन्येषां विषयः तु परोक्षः इति भावः।

### प्रमेयाणि

यावद् ज्ञानं जायते तत्र के विषयाः, कानि प्रमेयाणि इति चेत् विषयस्य सौकर्याय इत्थं वक्तुं शक्यते यत् -

- बाह्यविषयाः, अर्थात् पञ्चभिः ज्ञानेन्द्रियैः ज्ञेयाः विषयाः - द्रव्याणि तेषां गुणाः, मूर्तद्रव्यगताः क्रियाः, जातिः, उपाधिरूपाः धर्माः।
- अन्तःकरणे विद्यामानाः धर्माः। यथा सुखं दुःखम् धर्मः अधर्मः ज्ञानम् इत्यादिकम्।
- अन्तःकरणमपि स्वयं विषयः। अन्तःकरणे वृत्तिः जायते। वृत्तिरपि विषयः।
- प्रातिभासिकरजतादिकम्। अभावः।
- साक्षी। आत्मा।

एते विषयाः ज्ञातव्याः सन्ति। एषु कः प्रत्यक्षः, कः परोक्षः इत्यादिविवेचनं प्रचलति।

### सुखादिविषयकं प्रत्यक्षम्

सुखादिकम् प्रातिभासिकरजतादिकम् च यदा विषयः तदा कथं प्रत्यक्षम् उत्पद्यते।

सुखादिकं तु अन्तःकरणस्य धर्मः एव, आन्तरः विषयः, न तु बाह्यः। अतः इन्द्रियद्वारा वृत्तेः बहिर्गमनं नावश्यकम्। अत एव विषयः तदाकारा वृत्तिः च सदा एकदेशे भवति। तेन तदवच्छिन्नचैतन्ययोः अभेदः। अतः सुखादिविषयकं प्रत्यक्षम् ज्ञानम् उत्पद्यते। सुखावच्छिन्नचैतन्यं सुखाकारवृत्त्यवच्छिन्नचैतन्यं सदा एकदेशे अवस्थितम्। अतः सुखादिकस्य सदा प्रत्यक्षमेव ज्ञानम् उत्पद्यते। कदापि परोक्षं नोत्पद्यते।

### स्वगतसुखस्मृतौ अतिव्याप्तिः

यदा स्वस्य अतीतसुखस्य स्मृतिः भवति तत्र सुखं विषयः। स च अतीतः परन्तु अन्तःकरणमेव तस्य देशः। सुखाकारा स्मृतिरूपा वृत्तिः उदेति। वृत्तिदेशः अपि अन्तःकरणमेव। अतः सुखात्मकः उपाधिः वृत्त्यात्मकः उपाधिश्च एकदेशे अस्ति। अतः सुखावच्छिन्नचैतन्यस्य तदाकारवृत्त्यवच्छिन्नचैतन्येन अभेदः सदा अस्ति। तेन अतीतसुखस्य स्मृतिः अपि प्रत्यक्षं ज्ञानम् इति आपत्तिः। सुखस्मृतिः तु न प्रत्यक्षज्ञानमिति सिद्धान्तः। अतः अतिव्याप्तिवारणाय विषयस्य वर्तमानत्वं विशेषणं देयम्। अर्थः यदा विषयाकारा वृत्तिः उदेति तदा स विषयः वर्तमानः यदि स्यात् तर्हि तद्विषयकं ज्ञानं प्रत्यक्षम् इति अङ्गीकर्तव्यम्।

सुखस्मृतिस्थले यद्यपि सुखात्मकः उपाधिः किञ्च स्मृत्यात्मकः उपाधिः एकदेशे अस्ति, तथापि विषयः सुखम् अतीतम् अस्ति, वर्तमानं नास्ति। अतः अतीतसुखविषयकस्मृतौ न प्रत्यक्षत्वापत्तिः।

एतावता इदम् आयातं यद् यदि विषयः वर्तमानः अस्ति, किञ्च उपाधिद्वयम् एकदेशे अस्ति, तर्हि उपधेयचैतन्ययोः अभेदः भवति चेत् ज्ञानं प्रत्यक्षम् इति। अर्थात् **प्रमाणचैतन्यस्य वर्तमानविषयचैतन्येन अभेदः** प्रत्यक्षत्वस्य प्रयोजकम्।



### स्वगतधर्माधर्मज्ञाने अतिव्याप्तिः

वेदविहितकर्मणा कश्चित् संस्कारविशेषः उद्भवति, स धर्मः, पुण्यम् वा इति कथ्यते। स च अन्तःकरणे तिष्ठति।

वेदनिषिद्धकर्मकरणे कश्चित् संस्कारविशेषः उद्भवति, सः अधर्मः, पापं वा इति कथ्यते। स च अन्तःकरणे तिष्ठति।

यदा चैत्रः धार्मिकं मैत्रं प्रति वदति यद् त्वं धार्मिकः इति। तदा चैत्रस्य वाक्याद् मैत्रस्य स्वधर्मविषयकं शाब्दं ज्ञानम् उत्पद्यते। तस्मिन् ज्ञाने विषयः धर्मः अस्ति। स च धर्मः मैत्रस्य अन्तःकरणे अस्ति। एवञ्च वाक्यश्रवणादेव धर्माकारा वृत्तिः मैत्रस्य अन्तःकरणे उदेति। अतः धर्मदेशः अन्तःकरणम्। तद्वृत्तिदेशः अपि अन्तःकरणम्। किञ्च धर्मः अन्तःकरणे वर्तते, धर्मे वर्तमानत्वम् अस्ति। अतः प्रमाणचैतन्यस्य वर्तमानविषयचैतन्येन अभेदः अत्र भवति। अत्र प्रत्यक्षज्ञानस्य प्रोक्तं प्रयोजकम् अस्ति। तेन धर्मविषयके अस्मिन् ज्ञाने प्रत्यक्षत्वापत्तिः।

यद्यपि धर्माधर्मौ अन्तःकरणे वर्तेते। तथापि तद्विषयकं प्रत्यक्षं ज्ञानं कदापि कस्यापि मर्त्यस्य नैव उत्पद्यते। धर्माधर्मौ अनुमानेन आगमेन वा ज्ञायेते, न तु प्रत्यक्षेण प्रमाणेन।

अतः अतिव्याप्तिवारणाय योग्यत्वं विषयस्य विशेषणं देयम्। अर्थात् यदि **योग्यः** विषयः वर्तमानः अस्ति, किञ्च उपाधिद्वयम् एकदेशे अस्ति, तर्हि उपधेयचैतन्ययोः अभेदः भवति चेत् ज्ञानं प्रत्यक्षम् इति। अर्थात् **प्रमाणचैतन्यस्य योग्यवर्तमानविषयचैतन्येन अभेदः** प्रत्यक्षत्वस्य प्रयोजकम्।

सुखदुःखे अन्तःकरणे वर्तेते। धर्माधर्मौ अपि अन्तःकरणे वर्तेते। तथापि सुखदुःखयोः प्रत्यक्षं ज्ञानम् उत्पद्यते। धर्माधर्मौ तु न प्रत्यक्षज्ञानविषयौ। कथम् अयं भेदः। सुखदुःखयोः प्रत्यक्षयोग्यत्वम् अस्ति, धर्माधर्मयोः नास्ति। एवं पार्थक्यस्य किं कारणम्। तत्रोच्यते - फलबलकल्प्यः स्वभावविशेषः प्रयोजकः। फलम् अत्र प्रत्यक्षं ज्ञानम्, अनुमितिज्ञानं वा। तत्र सुखस्य प्रत्यक्षं भवति। अतः सुखे प्रत्यक्षत्वस्य प्रयोजकम् अस्ति। प्रत्यक्षत्वस्य प्रयोजकं च उद्भूतत्वम्। धर्मस्य अधर्मस्य वा प्रत्यक्षं न भवति। अतः तत्र प्रत्यक्षत्वस्य प्रयोजकम् उद्भूतत्वं नास्ति। अयमेव स्वभावविशेषः यत् कस्यचिद् उद्भूतत्वम् अस्ति, कस्यचिद् नास्ति। उद्भूतत्वं च लौकिकविषयतावत्त्वम् अथवा प्रत्यक्षत्वप्रयोजकधर्मविशेषः। अर्थात् तादृशधर्मविशेषः यद्वशात् तद्धर्मिविषयकं प्रत्यक्षं ज्ञानम् उत्पद्यते इति।

ज्ञानगतस्य प्रत्यक्षत्वस्य विषये अयं निर्गलितः अर्थः - **तत्तत्प्रत्यक्ष-योग्य-वर्तमान-विषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।**

चाक्षुषप्रत्यक्षयोग्यः वर्तमानः च घटः विषयः। तदवच्छिन्नचैतन्यस्य घटाकारवृत्त्यवच्छिन्नचैतन्येन अभेदः एव तदा उत्पन्नस्य ज्ञानस्य घटांशे प्रत्यक्षत्वम् इति समन्वयः।





## पाठगतप्रश्नाः -३

२२. अयं घटः इति चाक्षुषप्रत्यक्षं कथमुत्पद्यते इति वेदान्तमतेन।

२३. पर्वतो वह्निमान् धूमात् इत्यादिकम् अनुमानस्थले कस्य प्रत्यक्षत्वम्।

२४. ज्ञानज्ञानं प्रत्यक्षमनुमितिरुपमितिः शाब्दम् वा।

२५. अनुमितिः प्रत्यक्षेण ज्ञायते न वा।

२६. सुखस्मृतिः प्रत्यक्षा न वा।

२७. पुण्यस्य कारणं किम्।

२८. पापम् किम्।

२९. धर्मः प्रत्यक्षवेद्यः न वा।

३०. अधर्मः प्रत्यक्षवेद्यः न वा।

३१. ज्ञानगतस्य प्रत्यक्षत्वस्य निर्गलितं लक्षणं लिखत।

## ६.३.२) विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकम्

इतः पूर्वं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं किमिति आलोचितम्। सविस्तरम्। इतः परं विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकं किमिति विषयः उपन्यस्यते।

प्रमात्रभिन्नत्वं हि विषयस्य प्रत्यक्षत्वम्। प्रमात्रभिन्नत्वम् इत्यस्य अर्थो हि प्रमातृसत्तातिरिक्त-सत्ताकत्वाभावः। प्रमातृसत्ता हि प्रमातृचैतन्यस्य सत्ता। प्रमातुः या सत्ता, ततः अतिरिक्ता सत्ता यस्य स प्रमातृसत्तातिरिक्तसत्ताकः। तत्त्वम् प्रमातृसत्तातिरिक्तसत्ताकत्वम्। तादृशस्य प्रमातृसत्तातिरिक्तसत्ताकत्वस्य अभावः एव प्रमात्रभेदः। अयमभावः यस्मिन् विषये स विषयः प्रत्यक्षः।

**विवरणम्**

वेदान्तमते समग्रं जगत् ब्रह्मणि अध्यस्तम्। अविद्योपहितं घटादिविषयावच्छिन्नं यत् चैतन्यं तस्मिन् सर्वोऽपि प्रपञ्चः अध्यस्तः। तत्र अधिष्ठानं चैतन्यम्। अध्यस्तः घटादिविषयः। सर्वोऽपि अध्यस्तो विषयः मिथ्या। अतः तस्य स्वकीया चैतन्यभिन्ना कापि सत्ता नास्ति। अधिष्ठानचैतन्यम् अध्यस्तस्य सत्ता। अविद्योपहितं घटावच्छिन्नं चैतन्यं हि घटस्य अधिष्ठानम्। तच्चैतन्यसत्ता एव घटस्य सत्ता, ततः भिन्ना घटस्य कापि सत्ता नाङ्गीक्रियते।

यदा अन्तःकरणं घटाकारं भवति तदा यथा प्रमाणावच्छिन्नं चैतन्यं विषयावच्छिन्नं चैतन्यम् एकदेशस्थं भवति, तद्वत् अन्तःकरणावच्छिन्नं चैतन्यम् अर्थात् प्रमातृचैतन्यमपि विषयदेशस्थं भवति। इत्थम् विषयचैतन्यं, प्रमाणचैतन्यं, प्रमातृचैतन्यं च एकदेशस्थं भवति। तदा एतच्चैतन्यत्रयस्य ऐक्यं भवति।



इत्थं विषयस्य सत्ता हि तदधिष्ठानम्। तच्च विषयावच्छिन्नं चैतन्यम्। प्रमातृचैतन्यस्य विषयचैतन्येन ऐक्यं भवति। अत्र प्रमातृचैतन्यस्य या सत्ता सा एव सत्ता विषयावच्छिन्नचैतन्यस्य सत्ता। विषयस्य सत्ता च विषयावच्छिन्नचैतन्यमेव। अतः प्रमातृसत्तातः अतिरिक्ता सत्ता विषयस्य नास्ति। एवम् प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः हि विषये अस्ति। अतः तादृशविषयः प्रत्यक्षः भवति।

**समन्वयः**

घटविषयं चाक्षुषप्रत्यक्षस्थले घटावच्छिन्नचैतन्यस्य या सत्ता सा एव घटस्य सत्ता। यदा चक्षुर्घटयोः सन्निकर्षः भवति तदा अन्तःकरणं घटदेशं गच्छति, घटाकारा वृत्तिः भवति। तदा घटावच्छिन्नचैतन्यं घटाकारवृत्त्यवच्छिन्नं प्रमाणचैतन्यं, प्रमातृचैतन्यं च एकेदशस्थं भवति, किञ्च तेषाम् अभेदः भवति। तत्र घटस्य सत्ता हि घटावच्छिन्नचैतन्यस्य सत्ता, घटावच्छिन्नचैतन्यं प्रमातृचैतन्यं च एकमेव। अतः प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः एव घटस्य अस्ति इति घटः प्रत्यक्षः विषयः। प्रत्यक्षः विषयः एव अपरोक्षः विषयः अपि कथ्यते।

यदा पर्वतो वह्निमान् इत्यादिः अनुमितिः उत्पद्यते तदा इन्द्रियस्य पर्वतेन सन्निकर्षः भवति, वह्निना सह नैव भवति। अतः अन्तःकरणं पर्वतदेशं गच्छति, वह्निदेशं तु न गच्छति। पर्वताकारा वृत्तिः उदेति, वह्न्याकारा तु नोदेति। अतः प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः पर्वते अस्ति, वह्नौ नास्ति। अतः एव पर्वतः प्रत्यक्षविषयः, वह्निः न प्रत्यक्षविषयः।

**धर्मादीनां प्रत्यक्षविषयत्ववारणम्**

चैत्रः धर्मवान् सुखात् इत्याद्यनुमानस्थले धर्मः अनुमानेन ज्ञातः। तदा धर्मस्य सत्ता धर्मावच्छिन्नं चैतन्यमेव। अन्तःकरणस्य क्वापि गमनस्यावश्यकता नास्ति यतो हि धर्मः अन्तःकरणे एव वर्तते। अतः प्रमातृचैतन्यस्य सत्ता एव धर्मावच्छिन्नचैतन्यस्य सत्ता। अतः एव प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः धर्मे लभ्यते। तेन धर्मस्य प्रत्यक्षत्वापत्तिः। धर्मः कदापि न प्रत्यक्षः। अतः तद्वारणाय योग्यत्वं विषयस्य विशेषणं देयम्। अर्थात् **प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः यदि प्रत्यक्षयोग्ये विषये स्यात् तर्हि स विषयः प्रत्यक्षः बोध्यः**। एवञ्च धर्मः न प्रत्यक्षयोग्यः। अतः प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः धर्मे अस्ति, तथापि प्रत्यक्षयोग्यत्वं धर्मे नास्तीति नातिव्याप्तिः।

अतीतसुखस्य अनुमितिः भवति चेत् सुखाकारा वृत्तिः उत्पद्यते। सुखम् अन्तःकरणे, वृत्तिः च अन्तःकरणे भवतः। तदा प्रमातृचैतन्यस्य विषयचैतन्यस्य च अभेदः भवति। तदा द्वयोः सत्ता न भिन्ना। एवं प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः किञ्च प्रत्यक्षयोग्यत्वं विषये सुखे वर्तते इति अतिव्याप्तिः। तद्वारणाय वर्तमानत्वं विषयस्य विशेषणं देयम्। **प्रत्यक्षत्व-वर्तमानत्वसमानाधिकणः प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः विषयगतप्रत्यक्षत्वस्य प्रयोजकः।** अतीतसुखे वर्तमानत्वाभावात् नातिव्याप्तिः।

नीलो घटः इति प्रत्यक्षस्थले घटगतनीलत्वस्य प्रत्यक्षत्वं भवति। यतो हि रूपे प्रत्यक्षयोग्यत्वं वर्तमानत्वं प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः च वर्तन्ते। यस्मिन् घटे नीलत्वं वर्तते तस्मिन्नेव घटे घटस्य परिमाणादिकं वर्तते। नीलत्वावच्छिन्नचैतन्यस्य उपाधिः नीलत्वम्। परिमाणावच्छिन्नचैतन्यस्य उपाधिः



परिमाणम्। नीलत्वं परिमाणं च घटे अर्थात् एकदेशे वर्तेते। अतः नीलत्वावच्छिन्नचैन्यस्य परिमाणावच्छिन्नचैतन्येन अभेदः अस्ति। नीलत्वावच्छिन्नचैतन्यस्य प्रमातृचैतन्येन अभेदः भवति। नीलत्वस्य सत्ता तु नीलत्वावच्छिन्नचैतन्यस्य सत्ता एव। किञ्च परिमाणस्य सत्ता परिमाणावच्छिन्नचैतन्यस्य सत्ता एव। इत्थं परिमाणे वर्तमानत्वं प्रत्यक्षयोग्यत्वं प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः च वर्तन्ते। अतः परिमाणस्य प्रत्यक्षत्वापत्तिः। किन्तु यदा रूपस्य प्रत्यक्षं भवति तदा परिमाणस्य प्रत्यक्षत्वं नाङ्गीक्रियते।

अतिव्याप्तिवारणाय तत्तदाकारवृत्त्युपहितत्वं प्रमातृचैतन्यस्य विशेषणं निवेशनीयम्। इत्थं **प्रत्यक्षयोग्यत्वं वर्तमानत्वं तत्तदाकारवृत्त्युपहित-प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः च यस्मिन् विषये स विषयः प्रत्यक्षः** इति बोध्यम्। अर्थात् यस्मिन् विषये प्रत्यक्षयोग्यत्वं वर्तमानत्वं चास्ति, एवञ्च तदाकारा एव या वृत्तिः, तदुपहितं यत् प्रमातृचैतन्यं तत्सत्तातिरिक्तसत्ताकत्वाभावः अपि तस्मिन्नेव विषये यदि स्यात् तर्हि स विषयः प्रत्यक्षः इति।

यदा नीलो घट इति चाक्षुषप्रत्यक्षं जायते तदा चक्षुषः नीलत्वेन सह संयुक्ततादात्म्यसम्बन्धः उत्पद्यते। तदा नीलत्वस्य चक्षुषः तयोः सम्बन्धस्य च स्वभाववशात् नीलत्वाकारा वृत्तिः उत्पद्यते, गन्धाद्याकारा वृत्तिः नोत्पद्यते। यदा नीलो घट इति ज्ञानं भवति, तदा नीलो महान् एको घट इत्यपि ज्ञानं सम्भवति। एकस्मिन्नेव ज्ञाने नीलत्वम् महत्त्वम् एकत्वं च भासन्ते। अतः परिमाणाकारा वृत्तिः सम्भवति। परन्तु प्रमाता यदि केवलं नीलो घट इति एव अभिलपितुम् इच्छति तदा परिमाणं विषयः न भवति। यदा परिमाणं विषयः नास्ति तदा एव अयं प्रश्नः उदेति। तत्र नीलत्वाकारया वृत्त्या प्रमातृचैतन्यमपि उपहितं भवति। अतः नीलत्वे प्रत्यक्षयोग्यत्वं वर्तमानत्वं नीलत्वाकारवृत्त्युपहित-प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः अस्ति। अतः नीलत्वं प्रत्यक्षः विषयः। परिमाणाकारा वृत्तिः नास्ति। अतः परिमाणाकारया वृत्त्या उपहितं चैतन्यमपि नास्ति। अतः यद्यपि परिमाणे प्रत्यक्षयोग्यत्वं वर्तमानत्वं चास्ति तथापि परिमाणाकारवृत्त्युपहित-प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः नास्तीति न परिमाणं प्रत्यक्षः विषयः।

न्यायमते अयं घटः इति प्रथमज्ञानं व्यवसायः कथ्यते। व्यवसायविषयकं प्रत्यक्षं ज्ञानम् अनुव्यवसायः कथ्यते। परन्तु वेदान्तिनः व्यवसायस्य ज्ञानम् अनुव्यवसायेन इति नाङ्गीकुर्वन्ति। अतः प्रथमज्ञाने एव प्रमातृ-प्रमिति-प्रमेयाणि इति त्रीणि भासन्ते। अर्थात् यदा घटः ज्ञाने भासते तदा तदाकारा वृत्तिरपि तस्मिन्नेव ज्ञाने भासते।

यदा घटविषयकं प्रत्यक्षं ज्ञानम् उत्पद्यते तदा घटाकारवृत्तिविषयकमपि प्रत्यक्षम् उत्पद्यते। परन्तु यथा घटज्ञानाय घटाकारवृत्तिः, तथा वृत्तिज्ञानाय वृत्त्याकारा अपरा द्वितीया वृत्तिः, द्वितीयवृत्तिज्ञानाय तृतीया वृत्तिः इति एवम् न भवति। अर्थात् द्वितीयतृतीयादिवृत्तयः न उद्भवन्ति। किन्तु घटाकारवृत्तिः स्वम् अपि विषयीकरोति। घटाकारवृत्तिः स्वयम् अधुना स्वस्य विषयः। अतः वृत्त्युपहित-प्रमातृसत्तातिरिक्ता तस्याः सत्ता नास्ति। अर्थात् तस्याम् वृत्त्युपहित-प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः अस्ति। एवञ्च तस्याम् वर्तमानत्वं, प्रत्यक्षयोग्यत्वं च अस्ति। अतः वृत्तिः प्रत्यक्षः विषयः।

१) अन्तःकरणम्, २) तद्धर्माः सुखादयः, ३) वृत्तिः, ४) प्रातिभासिकरजतादिकम् ५) साक्षी च इति एतद्विषयकम् अपि प्रत्यक्षं ज्ञानम् उत्पद्यते। परन्तु यथा घटादिप्रत्यक्षस्थले इन्द्रियार्थसन्निकर्षेण



अन्तःकरणं विषयदेशं गच्छति एवञ्च विषयाकारा प्रमाणवृत्तिः उदेति। तथा एतेषां विषये न भवति। एतेषां केनापि इन्द्रियेण सन्निकर्षः न भवति। अतः तत्तदाकारा प्रमाणवृत्तिः नैव भवति।

विषयः अज्ञानेन आवृतः भवति। यो विषयः अज्ञानावृतः भवति तद्विषये एव संशयविपर्ययादिकम् उत्पद्यते। विषयज्ञानाय अस्य अज्ञानस्य आवरणस्य भङ्गः आवश्यकः, एवञ्च साक्षिचैतन्येन सह सम्बन्धः आवश्यकः। एवम् आवरणभङ्गः साक्षिचैतन्यसम्बन्धः इति एतद्द्वयम् कथम् सम्भवति। यदा इन्द्रियार्थसन्निकर्षः भवति तदा अन्तःकरणम् इन्द्रियद्वारा विषयदेशं गच्छति, विषयाकारा प्रमाणवृत्तिश्च उदेति। तदा चैतन्ययोः अभेदः भवति, तेन आवरणभङ्गः भवति। अपि च प्रमाणवृत्तिद्वारा साक्षिचैतन्यस्य विषयेण सह सम्बन्धः अपि भवति। एवम् आवरणभङ्गः साक्षिसम्बन्धः च सम्पद्येते।

यो विषयः अज्ञानेन आवृतः नास्ति, अथवा यो विषयः साक्षात् साक्षिचैतन्येन सम्बद्धः अस्ति, तयोः प्रकाशनाय कापि प्रमाणवृत्तिः नापेक्षिता। ते च विषयाः १) अन्तःकरणम्, २) तद्धर्माः सुखादयः, ३) वृत्तिः, ४) प्रातिभासिकरजतादिकम् इति एते। एतेषां विषये कस्यापि संशयविपर्ययादिकं न भवति। अतः एते अज्ञानेन आवृताः न सन्ति। किञ्च एतेषां साक्षिचैतन्ये आश्रिताः, अतः साक्षिणा सह तेषां साक्षात् सम्बन्धोऽपि अस्ति। एतेषां ज्ञानाय यावद् साक्षिचैतन्यं विषयाकारं न भवति तावत् प्रत्यक्षं न उदेति। साक्षिचैतन्यं निराकारमस्ति। तस्य सुखाद्याकारात्वं स्वतः नैव सम्भवति। अतः चैतन्यस्य विषयाकारत्वाय अविद्यावृत्तिः उत्पद्यते। प्रमाणवृत्तितः अविद्यावृत्तिः भिन्ना इति अवधेयम्। किञ्च अविद्यावृत्तिः न अन्तःकरणवृत्तिः इत्यपि बोध्यम्।

**प्रत्यक्षयोग्यत्वं वर्तमानत्वं तत्तदाकारवृत्त्युपहित-प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः च यस्मिन् विषये स विषयः प्रत्यक्षः** इति प्रोक्तमेव। सुखादयः वर्तमानाः प्रत्यक्षयोग्याः सन्ति। किञ्च तत्तदाकारा अविद्यावृत्तिरपि उदेति। अतः तत्तदाकारवृत्त्युपहित-प्रमातृसत्तातः अतिरिक्ता तेषां सत्ता नास्ति। एवं लक्षणसमन्वयः भवति। यद्यपि सुखादीनां कृते इन्द्रियद्वारा बहिः अन्तःकरणस्य बहिः गमनाभावात् प्रमाणवृत्तिः न उदेति तथापि अविद्यावृत्तिः उदेति।

केचिद् विषयाः साक्षिवेद्याः। केचिच्च केवलसाक्षिवेद्याः। येषाम् इन्द्रियेण सन्निकर्षवशाद् तत्तदाकारा वृत्तिः भवति, सा प्रमाणवृत्तिः। येषां प्रकाशनाय प्रमाणवृत्तिः अपेक्षिता अथवा अनुमानादिप्रमाणव्यापारः अपेक्षितः, ते साक्षिवेद्याः कथ्यन्ते। येषां प्रकाशनाय प्रमाणवृत्तिः न अपेक्षिता, अनुमानादिप्रमाणव्यापारः नापेक्षितः, केवलम् अविद्यावृत्तिः अपेक्षिता ते केवलसाक्षिवेद्याः कथ्यन्ते।

तत्रायं निर्गलितः अर्थः - **स्वाकारवृत्त्युपहित-प्रमातृ-चैतन्य-सत्तातिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वे सति वर्तमानत्वं विषयगतं प्रत्यक्षत्वम्** इति। स्वम् अत्र विषयः।

एतावता ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं किम्, विषयगतस्य च प्रत्यक्षत्वस्य प्रयोजकम् किमिति अति विस्तरेण उपन्यस्तम्।



## पाठगतप्रश्नाः -४

३२. जगत् क्वाध्यस्तम्।

३३. वेदान्तमते अनुव्यवसायः अङ्गीकृतो न वा।

३४. सुखम् अज्ञानावृतमस्ति न वा।

३५. सुखविषये कस्यापि भ्रमो जायते वा।

३६. के साक्षिवेद्याः।

३७. के केवलसाक्षिवेद्याः।

३८. विषयगतप्रत्यक्षत्वस्य प्रयोजकस्य निष्कृष्टं लक्षणं किम्।



## पाठसारः

प्रमायाः षड् भेदाः - प्रत्यक्षप्रमा अनुमितिः उपमितिः शाब्दी अर्थापत्तिः अनुपलब्धिः चेति। एतासु प्रत्यक्षप्रमा का इति अस्मिन् पाठे विस्तरेण उपपादितम्। सावयवम् अन्तःकरणम् चक्षुरादीन्द्रियैः बहिः गत्वा विषयाकारम् भवति। अयं घटादिविषयाकारेण अन्तःकरणस्य परिणामः एव वृत्तिरिति कथ्यते। तेन घटादिद्रव्यं ज्ञायते। द्रव्यवृत्तिगुणानां द्रव्यात् न अत्यन्तं भेदः। अतः यथा द्रव्याकारा वृत्तिः तथैव गुणाद्याकारा वृत्तिरपि भवति। अन्तःकरणस्य अवस्थाविशेषः यत्र अस्तित्वादिव्यवहारस्य प्रतिबन्धकम् अज्ञानम् निवर्तते सा अवस्था एव वृत्तिरिति कथ्यते। घटादिविषयाकारा वृत्तिः भवति तदा घटादिविषयचैतन्यं अभिव्यक्तं भवति। इदम् अभिव्यक्तं चैतन्यमेव प्रत्यक्षप्रमा न तु उपाधिरहितं शुद्धं चैतन्यम्।

यया वृत्त्या विषयचैतन्यम् अभिव्यक्तं भवति सा वृत्तिः इन्द्रियस्य विषयेण यत्सम्बन्धवशात् उत्पद्यते स सम्बन्धः सन्निकर्षः कथ्यते। इन्द्रियं च सन्निकर्षात्मकव्यापारवत् प्रमां प्रति असाधारणं कारणम् अस्ति इत्यतः इन्द्रियं प्रत्यक्षप्रमायाः करणम् इति सिद्ध्यति।

वृत्त्यभिव्यक्तं चैतन्यम् प्रत्यक्षप्रमा। यद्यपि चैतन्यं नोत्पद्यते तथापि तदवच्छेदवृत्तिः उत्पद्यते। अतः तदवच्छिन्नं चैतन्यमपि जन्यम् उच्यते। यद्यपि ज्ञानं चैतन्यमेव तथापि अध्यासवशात् वृत्तिरेव ज्ञानम् इति व्यवहारः।

ज्ञानम् सुखं दुःखम् इच्छा द्वेषः धर्मः अधर्मः इत्यादयः अन्तःकरणधर्माः। यद्यपि एवं तथापि अहं सुखी इत्यादौ सुखम् आत्मधर्मः इति प्रतीयते। तत्रोच्यते - आत्मना अन्तःकरणस्य ऐक्याध्यासः भवति। तदा आत्मनि ज्ञानसुखादीनाम् अन्तःकरणधर्माणाम् आरोपः, अध्यासः भवति। अध्यासवशादेव



अनुभवः 'अहं सुखी' इत्यादिः उपपद्यते। एवञ्च मनः न इन्द्रियम्। अन्तःकरणोपहितं चैतन्यं साक्षी इति कथ्यते। साक्षी सदा प्रकाशस्वभावः।

किमपि ज्ञानम् प्रत्यक्षम् इत्यत्र प्रत्यक्षत्वस्य प्रयोजकं किम्। कोऽपि विषयः प्रत्यक्षः इत्यत्र प्रत्यक्षत्वस्य प्रयोजकम् किम्। एवं ज्ञानगतप्रत्यक्षत्वस्य विषयगतप्रत्यक्षत्वस्य प्रयोजकं किमिति विषयद्वयं सविस्तरमालोचितम् अस्मिन् पाठे। तत्र प्रमाणचैतन्यस्य योग्यवर्तमानविषयचैतन्येन अभेदः प्रत्यक्षत्वस्य प्रयोजकमिति सिद्धान्तितम्। स्वाकारवृत्त्युपहित-प्रमातृ-चैतन्य-सत्तातिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वे सति वर्तमानत्वं विषयगतं प्रत्यक्षत्वमिति सिद्धान्तितम्।



## पाठान्तप्रश्नाः

१. अन्तःकरणस्य सावयवत्वम् प्रतिपदायत।

२. वृत्तिः कथम् उत्पद्यते इति लिखत।

३. गुणक्रियाद्याकारा वृत्तिः कथम्।

४. प्रत्यक्षप्रमां विस्तारयत।

५. इन्द्रियस्य करणत्वम् उपपादयत।

६. वृत्तौ ज्ञानत्वोपचारः कथम्।

७. अनादि चैतन्यं कथं प्रमा।

८. ज्ञानदयः मनोधर्माः इति उपपादयत।

९. प्रत्यक्षज्ञानविषयत्वं प्रत्यक्षत्वस्य प्रयोजकम् इत्यत्र को दोषः।

१०. साक्षिलक्षणं सदलकृत्यम् उपस्थापयत।

११. प्रमाणचैतन्यादित्रिविधं चैत्यन्यम् वर्णयत।

१२. चैतन्यं तु एकमेव। कथं तर्हि तस्य त्रैविध्यम्।

१३. ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकस्य लक्षणं सदलकृत्यमुपस्थापयत।

१४. पर्वतो वह्निमान् धूमात् इत्यादिकम् अनुमानस्थले कस्य प्रत्यक्षत्वम् कुतः च।

१५. सुखादिविषयकं प्रत्यक्षं कथमुत्पद्यते।

१६. प्रमाणचैतन्यस्य वर्तमानविषयचैतन्येन अभेदः प्रत्यक्षत्वस्य प्रयोजकम् इति प्रयोजकलक्षणे वर्तमानत्वं यदि न विषयविशेषणं तर्हि का आपत्तिः।

१७. प्रमाणचैतन्यस्य योग्यवर्तमानविषयचैतन्येन अभेदः प्रत्यक्षत्वस्य प्रयोजकम् इति प्रयोजकलक्षणे योग्यत्वं यदि न विषयविशेषणं तर्हि का आपत्तिः।

१८. घटावच्छिन्नचैतन्यसत्ता एव घटस्य सत्ता इति कथम्।

१९. पर्वतो वह्निमान् इत्यादिः अनुमानस्थले पर्वतस्य कथं न प्रत्यक्षविषयत्वम्।



२०. सुखादीनां साक्षिवेद्यानां प्रत्यक्षं कथमुत्पद्यते।



## पाठगतप्रश्नानाम् उत्तराणि

१. प्रमा षोढा - प्रत्यक्षप्रमा अनुमितिः उपमितिः शाब्दी अर्थापत्तिः अनुपलब्धिः चेति।

२. प्रत्यक्षम्।

३. प्रत्यक्षशब्दस्य प्रयोगः त्रिषु अर्थेषु क्रियते। प्रत्यक्षम् प्रमाणम्। प्रत्यक्षम् ज्ञानम्। प्रत्यक्षः विषयः इति।

४. सावयवम्।

५. अनित्यः।

६. तन्मनोऽसृजत इति।

७. प्रत्यक्षप्रमा चैतन्यम्।

८. यया वृत्त्या विषयचैतन्यम् अभिव्यक्तं भवति सा वृत्तिः इन्द्रियस्य विषयेण यत्सम्बन्धवशात् उत्पद्यते स सम्बन्धः सन्निकर्षः कथ्यते।

९. तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारलक्षणम्।

१०. सन्निकर्षः।

११. व्यापारवद् असाधारणं कारणम् करणम्।

१२. अन्तःकरणस्य।

१३. अन्तःकरणस्य।

१४. श्रोत्रं त्वक् चक्षुः जिह्वा (रसना) घ्राणम् एतानि पञ्च ज्ञानेद्रियाणि।

१५. न।

१६. मनसः अनिन्द्रियत्वे प्रमाणं श्रुतिः - इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः इति।

१७. न।

१८. तत्तेदन्तावगाहि ज्ञानं हि प्रत्यभिज्ञा।

१९. अन्तःकरणोपहितं चैतन्यं साक्षी इति कथ्यते।

२०. अन्तःकरणस्य विषयाकारः परिणामविशेषः या वृत्तिः तया वृत्त्या अवच्छिन्नं चैतन्यम् हि प्रमाणचैतन्यम्।

२१. अन्तःकरणस्य यावान् अंशः विषयाकारः परिणामः नास्ति, तेन अन्तःकरणांशेन अवच्छिन्नं चैतन्यम् अन्तःकरणावच्छिन्नचैतन्यं, प्रमातृचैतन्यं, प्रमाता इति शब्दैः व्यपदिश्यते।

२२. अयं घटः इति चाक्षुषप्रत्यक्षस्थले घटः बाह्यः, अन्यदेशस्थः च। चक्षुषः घटेन सह संयोगवशात् अन्तःकरणम् चक्षुर्द्वारेण बहिः गच्छति, घटदेशस्थं भवति। एवञ्च तस्य घटाकारेण परिणामः



भवति। तदा घटाकारा वृत्तिः भवति। इयं वृत्तिरेव प्रमाणम्। तदवच्छिन्नं चैतन्यम् प्रमाणचैतन्यम्। यदा घटाकारा वृत्तिः भवति तदा घटावच्छिन्नचैतन्यस्य प्रमाणचैतन्येन अभेदः भवति। तदा 'अयं घटः' घटविषयकं चाक्षुषप्रत्यक्षम् ज्ञानम् उत्पद्यते।

२३. पर्वतस्य।

२४. प्रत्यक्षम्।

२५. ज्ञायते।

२६. न।

२७. वेदतन्मूलकशास्त्रविहितकर्मजन्यः अन्तःकरणस्य संस्कारविशेषः पुण्यम्।

२८. वेदतन्मूलकशास्त्रनिषिद्धकर्मानुष्ठानजन्यः अन्तःकरणस्य संस्कारविशेषः पापम्।

२९. न।

३०. न।

३१. तत्तत्प्रत्यक्ष-योग्य-वर्तमान-विषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।

३२. जगदवच्छिन्नचैतन्ये।

३३. न।

३४. न।

३५. न।

३६. येषां प्रकाशनाय प्रमाणवृत्तिः अपेक्षिता अथवा अनुमानादिप्रमाणव्यापारः अपेक्षितः, ते विषयाः साक्षिवेद्याः कथ्यन्ते।

३७. येषां प्रकाशनाय प्रमाणवृत्तिः न अपेक्षिता, अनुमानादिप्रमाणव्यापारः नापेक्षितः, केवलम् अविद्यावृत्तिः अपेक्षिता ते विषयाः केवलसाक्षिवेद्याः कथ्यन्ते।

३८. स्वाकारवृत्त्युपहित-प्रमातृ-चैतन्य-सत्तातिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वे सति वर्तमानत्वं विषयगतं प्रत्यक्षत्वम्।

॥ इति षष्ठः पाठः ॥



७

# प्रत्यक्षप्रमाणस्य प्रत्यक्षप्रमाणभेदाः

## प्रस्तावना

पूर्वस्मिन् पाठद्वये दर्शनं दर्शनभेदाः प्रमाणानि प्रमाभेदाः इति आलोचितम्। तत्र प्रत्यक्षप्रमा का इति सविस्तरमुपस्थाप्य किमपि ज्ञानम् प्रत्यक्षम् इत्यत्र प्रत्यक्षत्वस्य प्रयोजकं किम्। कोऽपि विषयः प्रत्यक्षः इत्यत्र प्रत्यक्षत्वस्य प्रयोजकम् किम्। एवं ज्ञानगतप्रत्यक्षत्वस्य विषयगतप्रत्यक्षत्वस्य च प्रयोजकं किमिति विषयद्वयं सविस्तरमालोचितम्।

अस्मिन् पाठे प्रत्यक्षप्रमाणस्य प्रकाराः के इति विषयः प्रस्तूयते। अन्तःकरणस्य वृत्तिभेदात् बुद्धिः मनः अहंकारः चित्तम् इत्यादीनि नामानि कथं भवन्ति इति विषयः सयुक्ति प्रतिपादयिष्यते। प्रत्यक्षज्ञानस्य सविकल्पक-निर्विकल्पकभेदात् द्वैविध्यम् उपस्थापयिष्यते। एवञ्च तत्त्वमसि इति महावाक्यात् कथं निर्विकल्पकम् ज्ञानं जायते इति व्याख्यास्यते।

जीवसाक्षि ईश्वरसाक्षि इति रूपेण प्रत्यक्षस्य भेदाः प्रतिपादयिष्यन्ते। प्रसङ्गात् जीवः जीवसाक्षी ईश्वरः ईश्वरसाक्षी इत्येतेऽपि विषयाः स्पष्टीकरिष्यन्ते।

प्रत्यक्षज्ञानं प्रकारान्तरेण इन्द्रियजन्यम् इन्द्रियाजन्यं चेति द्विविधम् इति उपस्थाप्य प्रसङ्गात् सन्निकर्षभेदाः स्पष्टीकरिष्यन्ते।



## उद्देश्यानि

पाठस्यास्य पठनेन भवान्

- प्रत्यक्षप्रमाणस्य सविकल्पक-निर्विकल्पकभेदान् ज्ञास्यति।
- प्रत्यक्षप्रमाणस्य इन्द्रियजन्यम् इन्द्रियाजन्यं चेति भेदद्वयम् अवगच्छेत्।
- बुद्ध्यादीन् वृत्तिभेदान् बुध्यात्।
- जीवः जीवसाक्षी ईश्वरः ईश्वरसाक्षी एतान् विषयान् जानीयात्।

## ७.१) बुद्ध्यादयः

आदौ इन्द्रियस्य अर्थेन सन्निकर्षः भवति। ततः अन्तःकरणम् अर्थदेशं गच्छति। ततः अर्थाकारा वृत्तिः उदेति। ततः प्रमेयचैतन्यस्य प्रमाणचैतन्यस्य च अभेदः भवति। तदा अर्थविषयकं प्रत्यक्षं ज्ञानम्



उत्पद्यते इति। तत्र चैतन्याभिव्यञ्जिका वृत्तिः चतुर्धा। १) संशयः २) निश्चयः ३) गर्वः ४) स्मरणम् इति भेदात्। सा वृत्तिः एतच्चतुर्विधज्ञानोपयोगिनी इति तात्पर्यम्। अहं चिद्रूपो वा देह एव वा इत्येवं ज्ञानं संशयः। चिद्रूप एवाहम् इत्येवं ज्ञानं निश्चयः। गर्वः हि मदः। स च स्वोत्कर्षज्ञानम्। यथा अहं महात्मा धनवान् , मत्तुल्यः कोऽस्ति भूतले, अहमेव कर्ता भोक्ता इत्येवम्। स्मरणं स्मृतिः। अतीतानुभूतस्य विषयस्य संस्कारमात्रजन्यं ज्ञानं स्मृतिः। तदुक्तम् -

मनो बुद्धिरहङ्कारश्चित्तं करणान्तरम्।

संशयो निश्चयो गर्वः स्मरणं विषया इमे॥

कारिकार्थः - संशयाकारा अन्तःकरणवृत्तिः हि मनः। निश्चयाकारा अन्तकरणस्य वृत्तिः हि बुद्धिः। गर्वाकारा अभिमानात्मिका अन्तःकरणस्य वृत्तिः हि अहङ्कारः। स्मृतिविषयाकारा अन्तःकरणवृत्तिः चित्तम्। इत्थम् एकमेव अन्तःकरणं वृत्तिभेदेन मनः बुद्धिः अहङ्कारः चित्तम् इति चतुर्धा व्यपदिश्यते।

यैः वृत्तिचतुष्टयम् उच्यते तेषाम्मतम् इत्थम् - मनसः विषयः बाह्यः आभ्यन्तरः च। अहंकारस्य विषयः तु अनात्मोपरक्तः आत्मा एव इति मनोऽहङ्कारयोः विषयभेदात् वृत्तेरपि द्वैविध्यम्। बुद्धेः विषयः अपूर्वः भवति, चित्तस्य विषयस्तु पूर्वानुभूतः, नापूर्वः इति विषयभेदात् अत्रापि बुद्धिः चित्तम् इति द्वैविध्यम्। इत्थं चातुर्विध्यम् वृत्तेः सम्पद्यते।

केषाञ्चिन्मते मनो बुद्धिः इति द्वैविध्यमेव। तदा तु अहङ्कारस्य मनसि अन्तर्भावः। चित्तस्य बुद्धौ अन्तर्भावः। मनः संकल्पविकल्पात्मकम्। अहंकारः संकल्पात्मकः। अतः तस्य मनसि अन्तर्भावः। बुद्धिः निश्चयात्मिका। चित्तमपि निश्चयात्मकमेव।

विवरणसम्प्रदायमते तु प्रमाणवृत्तिः अविद्यावृत्तिः इति वृत्तिभेदः पूर्वमेव प्रदर्शितः। मनः अहङ्कारः चित्तं च न प्रमाणवृत्तिः। एताः अविद्यावृत्तयः। अतः चत्वारः वृत्तिभेदाः अपि न सम्भवन्ति, भेदद्वयमपि न सम्भवतीत्यपि अवधेयम्।

## ७.२) प्रत्यक्षज्ञानस्य प्रकाराः

विविधैः प्रकारैः प्रत्यक्षज्ञानस्य भेदाः प्रतिपाद्यन्ते। ते अत्र क्रमशः उपन्यस्यन्ते।

### ७.२.१) प्रथमः प्रकारः -

प्रत्यक्षज्ञानं द्विविधम् सविकल्पक-निर्विकल्पकभेदात्।

#### सविकल्पकम्

वैशिष्ट्यावगाहि ज्ञानं सविकल्पकम्। (संसर्गावगाहि ज्ञानम्)। विशेष्यविशेषणयोः सम्बन्धः (संसर्गः) एव वैशिष्ट्यम्। वैशिष्ट्यम् (संसर्गम्) अवगाहते विषयीकरोति इति वैशिष्ट्यावगाहि (संसर्गावगाहि) ज्ञानम्। विशिष्टत्वेन कल्पनं ज्ञानं विकल्पः। विशेषणविशेष्ययोः सम्बन्धविषयकं ज्ञानमिति यावत्। अर्थात् यस्मिन् ज्ञाने वैशिष्ट्यं भासते तद् सविकल्पकं ज्ञानम्। विशेषणं प्रकार इत्यपि कथ्यते।



घटत्वविशिष्टः घटः इति वाक्यं भवति। तदेव घटत्ववैशिष्ट्यं घटे इति रूपेणापि प्रकटयितुं शक्यम्। अत्र घटे वैशिष्ट्यम् अस्ति। इदं वैशिष्ट्यं तु घटत्वस्य घटेन सह सम्बन्धविशेषः एव नान्यत्। अत्र घटत्वं प्रकारः।

अयं घट इति उदाहरणम्। अस्मिन् ज्ञाने घटत्वं विशेषणत्वेन भासते, घटः विशेष्यत्वेन भासते। घटघटत्वयोः तादात्म्यसम्बन्धः च भासते। अयं सम्बन्ध एव वैशिष्ट्यम्। अतः अस्मिन् ज्ञाने वैशिष्ट्यं भासते इति इदं ज्ञानं सविकल्पकम्। यस्मिन् ज्ञाने प्रकारः प्रकारत्वेन भासते तज्ज्ञानमपि सविकल्पकम्। अर्थात् सप्रकारकं ज्ञानं सविकल्पकम्।

घटज्ञानवान् अहम् इति अपरम् उदाहरणम्। अस्मिन् ज्ञाने घटविषयकं ज्ञानं विशेषणत्वेन भासते। आत्मा विशेष्यत्वेन भासते। तयोः तादात्म्यसम्बन्धः अपि भासते। अतः इदं ज्ञानं सविकल्पकं ज्ञानम्।

### निर्विकल्पकम्

संसर्गानवगाहि ज्ञानम् निर्विकल्पकम्। यथा सोऽयं देवदत्तः, तत्त्वमसि इत्यादिकम्।

आगमप्रमाणेन शब्दप्रमाणेन वा यज्ज्ञानं जायते तत् शाब्दं ज्ञानम् उच्यते।

सामान्यतः शाब्दज्ञानं संसर्गावगाहि ज्ञानं भवति, अर्थात् सविकल्पकं भवति। परन्तु सोऽयं देवदत्तः इत्यादिस्थले इदं ज्ञानं निर्विकल्पकम्। कथमिदं निर्विकल्पकमिति अधस्ताद् उपन्यस्यते। महावाक्यस्य पदार्थशोधने अस्य महान् उपयोगो भवति।

### सोऽयं देवदत्तः इति वाक्याद् निर्विकल्पकं ज्ञानम्

देवदत्ते सम्मुखे स्थितेऽपि चैत्रः सन्देहापन्नः यत् सम्मुखे स्थितः पुरुषः देवदत्तो न वा। अथवा सम्मुखे स्थितः पुरुषः न देवदत्तः इति भ्रमापन्नः। तं चैत्रं प्रति मैत्रः वदति यत् सोऽयं देवदत्तः इति। अस्माद् वाक्याद् चैत्रस्य प्रमा जायते। अतः वाक्यजन्यं इदं ज्ञानं शाब्दज्ञानम्।

यदा चैत्रः वाक्यं शृणोति तदा आदौ तत्-पदेन तद्देश-तत्कालविशिष्टः इति, इदंपदेन एतद्देश-एतत्कालविशिष्टः इति, देवदत्तपदेन देवदत्तव्यक्तिः इति, सः अयम् इति द्वयोः पदयोः समाना विभक्तिः, अतः अभेदः इति एते चत्वारः अर्थाः उपतिष्ठन्ते। उपस्थितेभ्यः एतेभ्यः पदार्थेभ्यः तेषाम् आकाङ्क्षादिवशात् परस्परम् अन्वयः भवति। तदा तद्देश-तत्कालविशिष्टाभिन्नः एतद्देश-एतत्कालविशिष्टाभिन्नः देवदत्तः इति वाक्यबोधः जायते। देवदत्ते युगपद् तद्देश-तत्कालवैशिष्ट्यम्, एतद्देश-एतत्कालवैशिष्ट्यं नैव सम्भवति, द्वयोः वैशिष्ट्ययोः विरोधात्। अतः मुख्यार्थस्य बाधः भवति। तदा चैत्रः मैत्रस्य तात्पर्यं बुद्ध्वा लक्षणां करोति। लक्षणायां विरुद्धयोः द्वयोः अंशयोः त्यागं करोति। किञ्च केवलं देवदत्तस्य स्वरूपमात्रं गृह्णाति, देवदत्तव्यक्तिमात्रं बोधः जायते। अस्मिन् ज्ञाने संसर्गः न विषयीभवति। अतः इदं ज्ञानं संसर्गानवगाहि ज्ञानम्। अत एव निर्विकल्पकम्। इदं ज्ञानं शब्दात् जायते इति शाब्दम् ज्ञानम्। तथापि संसर्गं नावगाहते। एवञ्च देवदत्तः सन्निकृष्टः अस्ति, पुरतः अस्ति, अतः देवदत्तविषयं प्रत्यक्षं ज्ञानमिदम्। अत इदं ज्ञानं निर्विकल्पकं प्रत्यक्षं ज्ञानम्। देवदत्ते प्रत्यक्षयोग्यत्वं,



वर्तमानत्वं, देवदत्ताकारवृत्त्युपहित-प्रमातृ-चैतन्य-सत्तातिरिक्त-सत्ताकत्वशून्यत्वं चास्ति इति देवदत्तः प्रत्यक्षः विषयः अस्ति एव।

**तत् त्वमसि इति महावाक्यात् निर्विकल्पकं ज्ञानम्**

तत् त्वमसि इति महावाक्यादपि निर्विकल्पकं ज्ञानम् उत्पद्यते। तथाहि - आदौ तत् त्वमसि इति अधिकारिणः वाक्यश्रवणं भवति। ततः पदद्वयमपि प्रथमान्तम् अस्ति इत्यतः पदद्वयस्य सामानाधिकरण्यस्य उपस्थितिः भवति। ततः तत्-पदात् सर्वज्ञत्वविशिष्टं चैतन्यम् इति अर्थोपस्थितिः भवति। त्वम्-पदात् अल्पज्ञत्वादिविशिष्टं चैतन्यम् इति अर्थस्योपस्थितिः भवति। प्रथमाविभक्तिवशात् अभेदस्य उपस्थितिः भवति। ततः सर्वज्ञत्वविशिष्टचैतन्याभिन्नम् अल्पज्ञत्वविशिष्टचैन्यम् इति विशिष्टचैतन्यद्वयस्य अभेदबोधः जायते। किन्तु यस्मिन् चैतन्ये सर्वज्ञत्वं तस्मिन्नेव अल्पज्ञत्वम् इति न सम्भवति। अतः प्रतिसन्धाने कृते विरुद्धधर्मद्वयविशिष्टचैतन्यविषयकम् अभेदज्ञानं बाधितम् भवति। तदा लक्षणया विरुद्धांशयोः त्यागं कृत्वा चैतन्यमात्रविषयकः अधिकारिणः बोधः जायते। अस्मिन् ज्ञाने संसर्गः न भासते। अतः नेदं संसर्गविषयकम्। संसर्गानवगाहि ज्ञानमिदं भवति निर्विकल्पकं ज्ञानम्। एवञ्च इदं प्रत्यक्षं ज्ञानम्। अतः निर्विकल्पकप्रत्यक्षस्य उदाहरणमिदम्।

एवं प्रकारेण तत् त्वमसि इत्यादिवाक्येभ्यः जायमाने ज्ञाने संसर्गः विषयः नास्ति। अतः तैः अखण्डार्थः प्रतिपाद्यते इति कथ्यते। एवं वाक्यानाम् अखण्डार्थप्रतिपादकत्वम्।

एतावता प्रत्यक्षज्ञानस्य सविकल्पकनिर्विकल्पकभेदौ सविस्तरं प्रतिपादितौ। इतः परं द्वितीयः प्रकारः उपस्थाप्यते।

तच्च द्विविधं प्रत्यक्षज्ञानं जीवेश्वरसम्बन्धात् पुनः द्विविधम् **जीवसाक्षि ईश्वरसाक्षि** चेति भेदात्।

कः जीवः कः जीवसाक्षी कः ईश्वरः कः ईश्वरसाक्षी इति ज्ञानं विना एते प्रत्यक्षभेदाः दुर्बोधाः। अतः स विषयः अत्र उपस्थाप्यते।

प्रमाणविषयके प्रथमपाठे उपलक्षणम् उपाधिः विशेषणम् इति एतेषां शब्दानां सविस्तरम् आलोचना विहिता। तस्य अत्र पुनः स्मरणम् अपेक्षितमस्ति। उपधिविशेषणयोः सम्यग् ज्ञानं विना जीवेश्वरविषयः दुरवगमः।

**जीवः**

कः जीवः, अथवा जीवत्वं कस्य इति निर्णेयम् अस्ति। अन्तःकरणं जडमस्ति। तस्य जीवत्वं न सम्भवति। शुद्धचैतन्यं निर्विकारमस्ति। अतः तस्यापि जीवत्वं नैव सम्भवति। परन्तु कर्तृत्वभोक्तृत्वाभिमानी अहंपदवाच्यः कश्चित् चेतनः जीवस्तु अङ्गीकर्तव्यः। अतः अन्तःकरणेन अवच्छिन्नं चैतन्यमेव जीवः इति अङ्गीक्रियते। न केवलं चैतन्यं न वा केवलम् अन्तःकरणम्



अहंपदवाच्यम्। तद्द्वयं मिलितम् अहंपदवाच्यं भवति। जीवत्वं केवलं चैतन्यस्य नास्तीति उक्तमेव। अतः जीवत्वस्य अन्वयः चैतन्येऽपि भवति, अन्तःकरणेऽपि भवति। न समग्रे चैतन्ये जीवत्वान्वयः, केवलम् अन्तःकरणेन अवच्छिन्ने चैतन्ये एव जीवत्वान्वयः। अतः अन्तःकरणं वर्तमानं सत् चैतन्यस्य व्यावर्तकम् अस्ति। अपि च अन्तःकरणस्य येन चैतन्येन सम्बन्धः, यस्य चैतन्यस्य व्यावर्तनं कृतं तस्य एव चैतन्यस्य विधेयं यद् जीवत्वं तेनापि अन्वितं भवति। अतः इदम् अन्तःकरणं विशेषणम् भवति। विशेषणमेव अत्र अवच्छेदकं कथ्यते। इत्थम् अन्तःकरणावच्छिन्नचैतन्यं जीवः कथ्यते।

### जीवसाक्षी

चैतन्यमेव विषयावभासकं विषयप्रकाशकं भवति। अन्तःकरणं तु जडम्। अतः तद् विषयावभासकं भवितुं नार्हति। यदि शुद्धं चैतन्यमेव विषयावभासकं स्यात् तर्हि सदा विषयप्रकाशः स्यात्। परन्तु विषयज्ञानं कदाचिद् उत्पद्यते, कदाचित् न। अतः शुद्धचैतन्यस्य विषयावभासकत्वम् अन्तःकरणस्य सम्बन्धेन भवति। अन्तःकरणोपहितं चैतन्यमेव विषयावभासकम्, अर्थात् साक्षि। विषयावभासकत्वस्य अन्वयः, साक्षित्वस्य अन्वयः चैतन्ये एव भवति, न तु अन्तःकरणे। तच्च चैतन्यम् अन्तःकरणेन व्यावृत्तम्, न तु सकलम्। अतः अन्तःकरणं वर्तमानं सत् चैतन्यस्य व्यावर्तकमस्ति। किन्तु साक्षित्वं यद् विधेयं तस्य अन्वयः चैतन्ये एव भवति न तु अन्तःकरणे, अन्तःकरणं न कथमपि साक्षि। अतः अन्तःकरणं चैतन्यस्य उपाधिः, न तु विशेषणम्। इत्थम् अन्तःकरणोपहितं चैतन्यं जीवसाक्षी कथ्यते। प्रतिशरीरम् अन्तःकरणं भिन्नम्। अतः प्रत्येकम् अन्तःकरणैः उपहितं चैतन्यम् अपि भिन्नमेव। अतः जीवसाक्षी प्रतिशरीरं भिन्नः। चैत्रः यं विषयम् अनुभवति तं विषयं चैत्रः एव स्मरति, न तु मैत्रः। अतः प्रति शरीरं साक्षी भिन्नः एव।

यद्यपि एकमेव चैतन्यं जीवः जीवसाक्षी इति व्यपदिष्टं तथापि चैतन्यम् एकमेव। तद्यथा देवदत्तः पाचकः, देवदत्तः पाठकः इति वाक्यद्वयम्। अत्र पाचकत्वात् पाठकत्वं भिन्नमेव। तथापि तयोः आश्रयः देवदत्तः स एक एव। एवमेव जीवत्वात् साक्षित्वं च यद्यपि भिन्नं तथापि तयोः आश्रयः चैतन्यम् एकेमेव।

### ईश्वरः ईश्वरसाक्षी च

माया एका अनादिः अचेतना जडा च। तया अवच्छिन्नं चैतन्यं परमेश्वरः। यदा माया चैतन्यस्य विशेषणं भवति तदा मायावच्छिन्नं चैतन्यम् ईश्वरः कथ्यते। यदा माया चैतन्यस्य उपाधिः भवति तदा मायावच्छिन्नं चैतन्यं साक्षी कथ्यते। माया अनादिः। अतः तदवच्छिन्नं चैतन्यम् ईश्वरोऽपि अनादिः। मया एका। अतः ईश्वरोऽपि एक एव। ईश्वरस्य ईश्वरत्वस्य विलोपः भवति। यदा चरमजीवस्य मोक्षो भविष्यति तदा ईश्वरनाशो भूत्वा तस्य मायानिवृत्तिः भविष्यति। किञ्च ईश्वरस्य शुद्धब्रह्मरूपेण अवस्थितिः स्याद्।

### ईश्वरः

शुद्धं चैतन्यं जगत्सृष्टिस्थितिसंहारादिकं न करोति। मायावच्छिन्नं चैतन्यं तथा करोति। जगन्नियन्तृत्वं कर्मफलनियन्तृत्वम् ईश्वरत्वम्। ईश्वरत्वं चैतन्ये विधेयमस्ति। परन्तु मायासम्बन्धः यस्मिन् चैतन्ये अस्ति तस्मिन् विधीयमाने अस्मिन् ईश्वरत्वधर्मे अपि मायायाः अन्वयः भवति। अतः अत्र माया विशेषणमस्ति।



### ईश्वरसाक्षी

शुद्धं चैतन्यं न साक्षि। मायासम्बन्धादेव तस्य साक्षित्वं सम्भवति। साक्षित्वं चैतन्ये विधेयमस्ति। परन्तु मायासम्बन्धः यस्मिन् चैतन्ये अस्ति तस्मिन् विधीयमाने अस्मिन् साक्षित्वधर्मे मायायाः अन्वयः न भवति। अतः अत्र माया उपाधिरस्ति। माया जडा। अतः तस्याम् साक्षित्वं जगत्प्रकाशकत्वं न सम्भवति। अतः न तस्यां तदन्वयः।

### ब्रह्मा विष्णुः महेश्वरः

माया त्रिगुणात्मिका अस्ति। तथाहि गीता - दैवी ह्येषा गुणमयी मम माया दुरत्यया। इति। गुणपदस्यार्थः रज्जुः, न तु नीलत्वादिगुणः। रज्जुः यथा बध्नाति तथा एते गुणाः अपि बध्नन्तीति गुणपदवाच्यता तेषाम्। यदा सत्त्वगुणप्रधानमायोपहितं चैतन्यं तदा तद् विष्णुः इति व्यपदिश्यते। यदा रजोगुणप्रधानमायोपहितं चैतन्यं तदा तद् ब्रह्मा इति व्यपदिश्यते। यदा तमोगुणप्रधानमायोपहितं चैतन्यं तदा तद् महेश्वरः इति व्यपदिश्यते। उपाधिनिष्ठगुणभेदेन उपहितस्य भेदः कल्प्यते। वस्तुतः स ईश्वरः एक एव।

इत्थं जीवः जीवसाक्षी ईश्वरः ईश्वरसाक्षी चेति चैतन्यस्य चत्वारो भेदाः उपस्थापिताः।

घटमहं जानामि इति ज्ञानम् उत्पद्यते। अस्मिन् ज्ञाने घटः, घटज्ञानं, ज्ञाता जीवश्च इति एते त्रयः विषयः। परन्तु जीवस्य वेत्ता न जीवः, न घटः, न घटविषयकं ज्ञानम्। अतः जीवस्य वेत्ता साक्षी अङ्गीक्रियते। साक्षी स्वयंप्रकाशः। तस्य ग्रहणे पुनः अपरस्य ग्राहकस्य कल्पनम् अनुचितम् अनावश्यकम् अनवस्थाजनकं च।

जीवस्य सविकल्पकं निर्विकल्पकं च ज्ञानम् उत्पद्यते। तथा साक्षिणः अपि। तथैव ईश्वरस्य ईश्वरसाक्षिणः च। अतः सविकल्पकं निर्विकल्पकं च ज्ञानं चतुर्धा विभज्यते।

सविकल्पकम् - १) जीवसविकल्पकम् २) जीवसाक्षिसविकल्पकम् ३) ईश्वरसविकल्पकम् ४) ईश्वरसाक्षिसविकल्पकम् चेति। अत्र जीवादयः ज्ञातारः न तु विषयाः।

निर्विकल्पकम् - १) जीवनिर्विकल्पकम् २) जीवसाक्षिनिर्विकल्पकम् ३) ईश्वरनिर्विकल्पकम् ४) ईश्वरसाक्षिनिर्विकल्पकम् चेति। अत्र जीवादयः ज्ञातारः न तु विषयाः।



## पाठगतप्रश्नाः -१

१. चैतन्याभिव्यञ्जिका वृत्तिः कतिधा। के च भेदाः।

२. का बुद्धिः।

३. कोऽहंकारः।

४. किं चित्तम्।



५. किं मनः।

६. मनो बुद्धिरहङ्कार ... इति कारिकां लिखत।

७. वृत्तिचतुष्टयवादिमते बुद्धिचित्तयोः भेदस्य कारणं किम्।

८. वृत्तिचतुष्टयवादिमते मनोऽहंकारयोः भेदस्य कारणं किम्।

९. किम् सविकल्पकम् ज्ञानम्।

१०. अयं घटः इति सविकल्पकज्ञाने किं वैशिष्ट्यं भासते।

११. घटज्ञानवान् अहम् इति सविकल्पकज्ञाने किं वैशिष्ट्यं भासते।

१२. निर्विकल्पकज्ञानस्य लक्षणम् किम्।

१३. सोऽयं देवदत्तः इति वाक्याद् सविकल्पकम् उत निर्विकल्पकं ज्ञानम् जायते।

१४. तत्त्वमसि इति महावाक्याद् सविकल्पकम् उत निर्विकल्पकं ज्ञानम् जायते।

१५. कः जीवः।

१६. कः जीवसाक्षी।

१७. जीवसाक्षी प्रतिशरीरम् एको भिन्नो वा।

१८. कः ईश्वरः।

१९. कः ईश्वरसाक्षी।

---

## ७.२.२) द्वितीयः प्रकारः -

प्रत्यक्षज्ञानं प्रकारान्तरेण पुनः द्विविधम् इन्द्रियजन्यम् इन्द्रियाजन्यं चेति भेदात्।

अन्तःकरणं तद्वृत्तिः सुखादिधर्माः इति एषां विषयाणां ज्ञाने पञ्च ज्ञानेन्द्रियाणि न कारणम्। तेषां विषयैः सम्बन्धाभावात्। अतः एतेषां ज्ञानाय इन्द्रियजन्या प्रमाणवृत्तिः न उदेति। तत्र अविद्यावृत्तिः उदेति। तया वृत्त्या सुखादीनां प्रत्यक्षं ज्ञानं जायते। अतः इदं प्रत्यक्षज्ञानं इन्द्रियाजन्यम्।

इन्द्रियस्य विषयेण सम्बन्धः यो ज्ञानस्य जनकः भवति स सन्निकर्षः कथ्यते इति उक्तमेव। स एव अधस्तात् सविस्तरं उपन्यस्यते।

### सन्निकर्षः

इन्द्रियस्य विषयेण सम्बन्धः भवति चेत् वृत्तिः उत्पद्यते। तया वृत्त्या विषयचैतन्यम् अभिव्यक्तं भवति। इन्द्रियविषययोः तादृशः सम्बन्धः एव सन्निकर्षः कथ्यते।

श्रोत्रं त्वक् चक्षुः जिह्वा (रसना) घ्राणम् एतानि पञ्च ज्ञानेन्द्रियाणि। तानि स्वस्थाने स्थितानि शब्दस्पर्शरूपरसगन्धादिभिः अर्थैः सम्बन्धं जनयन्ति।



ज्ञानस्य प्रत्यक्षत्वे विषयस्य च प्रत्यक्षत्वे सन्निकर्षः हेतुर्भवति। स सन्निकर्षः किंस्वरूपः इति जिज्ञासा।

के विषयाः प्रमेयाः - घटादिविषयाः, अन्तःकरणम् इन्द्रियाणि च द्रव्यम्। रूपरसादयः गुणाः। जातिगुणकर्मादयः द्रव्याभिन्नाः। गुणः द्रव्यात्मकः। कर्म द्रव्यात्मकम्। जातिः द्रव्यात्मिका। ते च गुणादयः द्रव्ये तादात्म्यसम्बन्धेन वर्तन्ते। तादात्म्यसम्बन्धः एव अभेदसम्बन्धः कथ्यते। गमनादिकम् क्रिया। क्रिया द्रव्ये एव तादात्म्यसम्बन्धेन वर्तते। गुणे गुणत्वं, रूपे रूपत्वं, क्रियायां क्रियात्वं सामान्यम्। तच्च तादात्म्यसम्बन्धेन गुणादिषु वर्तते।

यदि इन्द्रियस्य अर्थेन सह सन्निकर्षः स्यात् तर्हि विषयाकारा वृत्तिः उदियात्, नो चेत् न। यदा अर्थः घटादिद्रव्यम् भवति तदा द्वयोः द्रव्ययोः संयोगः सम्बन्धः इति न्यायेन इन्द्रियस्य घटादिद्रव्येण सह संयोगः सम्बन्धः भवति। अयं सम्बन्ध एव सन्निकर्षः। अतः द्रव्याकारवृत्तिं प्रति संयोगः सन्निकर्षः कारणम्।

गुणेन क्रियया वा सह इन्द्रियस्य संयुक्ततादात्म्यसम्बन्धः। यतो हि इन्द्रियसंयुक्तं द्रव्यम्, तस्मिन् द्रव्ये तादात्म्यसम्बन्धेन गुणः अस्ति। यदा इन्द्रियस्य गुणादिना संयुक्ततादात्म्यसम्बन्धः भवति तदा गुणाकारा कर्माकारा च वृत्तिः उदेति। द्रव्ये तादात्म्यसम्बन्धेन वर्तमाना ये गुणादयः, तदाकारवृत्तिं प्रति संयुक्ततादात्म्यसन्निकर्षः कारणम्।

द्रव्ये गुणः तादात्म्यसम्बन्धेन (अभेदसम्बन्धेन) अस्ति। गुणे गुणत्वं तादात्म्यसम्बन्धेन अस्ति। इन्द्रियस्य गुणत्वेन सह संयुक्ताभिन्नतादात्म्यसम्बन्धः भवति। इन्द्रियसंयुक्तं द्रव्यम्। तत्र अभेदेन गुणः अस्ति। अतः द्रव्याभिन्नः गुणः। द्रव्याभिन्ने गुणे गुणत्वं तादात्म्यसम्बन्धेन। अतः इन्द्रियस्य गुणत्वेन संयुक्ताभिन्नतादात्म्यसम्बन्धः भवति। यदा एवं सम्बन्धः भवति तदा गुणत्वाकारा वृत्तिः उदेति। अत एव गुणत्वाकारवृत्तिं प्रति संयुक्ताभिन्नतादात्म्यसन्निकर्षः कारणम्।

यद्यपि द्रव्यादौ अभावः भवति तथापि अभावविषयकं प्रत्यक्षज्ञानं न उत्पद्यते। यतो हि अभावाकारा वृत्तिः न उदेतीति।

चक्षुः तेजःस्वभावम्। विषयदेशं गच्छति न वा इति विषये नैके मतभेदाः सन्ति। यदिन्द्रियं विषयदेशं गच्छति तस्य इन्द्रियस्य प्राप्यकारित्वम् अस्ति इति कथ्यते। यदिन्द्रियं विषयदेशम् अगत्वा एव विषयं गृह्णाति तस्य इन्द्रियस्य अप्राप्यकारित्वम् उच्यते। तेष्वेकं मतमत्रोपन्यस्यते। सन्निकृष्टाः घटादयः प्रकृष्टाः पर्वतादयः सन्ति। चक्षुः तेजःस्वरूपम्। अतः अति द्रुतं विषयदेशं गत्वा विषयाकारं भवतीति वक्तुं शक्यते। परन्तु सूर्यः अति दूरम् वर्तते। यदा सूर्यं पश्यामः तदा किं चक्षुः सूर्यदेशं गच्छति उत तस्य किरणाः एव अस्मद्देशम् आगच्छन्ति। यदि चक्षुः सूर्यदेशं गच्छति तर्हि स यत्रास्ति इति चिन्तयामः तत्र नैव भवति, ततः कोटियोजनानि दूरं भवति। अतः यद्देशे सूर्यः इति चिन्त्यते तद् भ्रान्तमेव। यदि सूर्यदेशगनम् अङ्गीकृतं तर्हि सूर्यस्य प्रतीतिः सूर्यस्य स्थाने एवास्तु। तथा न भवति। यावता कालेन सूर्यकिरणाः अस्मद्देशम् आयान्ति तावता कालेन पूर्वं सूर्यः यत्रासीत् तत्र प्रतीयते न तु वस्तुतः ज्ञानकाले यत्रास्ति तत्र।



केचित् ज्योतिष्मन्तः तारकादयः सुदूरं सन्ति। तेभ्यः प्रकाशस्यागमनाय प्रकाशवर्षं नाम परिमाणं भवति। अर्थात् यत्र सन्ति इति वयं पश्यामः तत्र नैव सन्ति। किञ्च तत्स्थानस्य समीपेऽपि न सन्ति। कदाचित् विनष्टाः अपि सन्ति। अतः स्वस्थाने नास्ति, अथवा विनष्टः पदार्थः, तस्य देशे कथं द्रष्टुं शक्यः। अतः एव चक्षुः विषयदेशं नैव गच्छति।

श्रोत्रमपि विषयदेशं न गच्छति। चक्षुषः तेजःस्वभावः। अतः कदाचित् तत् देशान्तरं गच्छति इति वक्तुं शक्यम्। परन्तु शब्दः कदाचित् समीपदेशे भवति कदाचिच्च बहुदूरं भवति। अतः तद्देशं गत्वा शब्दः श्रोतव्यः इति श्रोत्रेण कथं ज्ञातुं शक्यम्। यदि शब्दोत्पत्तिदेशात् कश्चित् संकेतः श्रोत्रपर्यन्तम् आयाति इति उक्तं तर्हि शब्दोऽपि आगच्छति, अथवा शब्दः एव स संकेतः इति अङ्गीकारे लाघवम्। सदा श्रोत्रं सर्वत्र प्रसृतम्। अतः शब्ददेशं प्रति गमनाय उद्बोधकस्य अपेक्षा नास्तीत्यपि वक्तुं न शक्यते। अन्यथा शब्दसमीपस्थदूरस्थानां समेषामपि युगपत् शब्दश्रुतिः स्यात्। तच्च न भवति। एवञ्च दूरे तक्षा काष्ठं छिनत्ति, तस्य कुठाराघातेन जनितः शब्दः श्रूयते। तदा कुठाराघातेन यत्क्षणे शब्दः उत्पद्यते तदा तस्य श्रोत्रेण ग्रहणं न भवति, विलम्बेन भवति। यदा कुठारस्य उद्यमनं करोति तदा शब्दः श्रूयते। अतः शब्दोत्पत्तिक्षणे शब्दः नैव श्रूयते। तत्र श्रवणे विलम्बः शब्दोत्पत्तिदेशस्य दूरत्वात् भिद्यते। व्योम्नि विमानं गच्छति। तस्य शब्दः महता विलम्बेन श्रूयते। शब्दानुवेधात् यत्र विमानमस्ति इति चिन्त्यते तत्र तन्नैव भवति। बहुदूरं भवति। यं शब्दं शृणुमः, श्रवणकाले तस्य शब्दस्य उत्पत्तिदेशे न विमानमस्ति, न शब्दः।

एवञ्च यदि विषयदेशे एव शब्दः श्रूयते इति मन्यते तर्हि दूरे स्थितस्य जनस्य श्रोत्रं यदा शब्दोत्पत्तिदेशं गच्छति तदा अवश्यं तत्र शब्दः अस्ति इति मन्तव्यम्। यदि दूरस्थस्य जनस्य श्रवणकाले शब्दोत्पत्तिदेशे शब्दः स्यात् तर्हि शब्दोत्पत्तिदेशे समीपे एव स्थितः जनः, दूरस्थजनश्च युगपदेव शब्दं शृणुयात्। तथा तु न भवति। समीपस्थः पूर्वं शृणोति, दूरस्थः विलम्बेन शृणोति। अतः श्रोत्रं विषयदेशं नैव गच्छति।

यदि अन्यानि इन्द्रियाणि विषयदेशम् अगत्वा एव विषयान् गृह्णन्ति तर्हि द्वयोरेव इन्द्रिययोः विषयदेशगमनम् अन्येषाम् अगमनम् इति वैषम्यं गौरवग्रस्तम्।



## पाठगतप्रश्नाः -२

२०. प्रत्यक्षज्ञानस्य द्वितीयप्रकारेण विभागः लेख्यः।

२१. सुखादिज्ञाने किमाख्या वृत्तिः।

२२. इन्द्रियाजन्यं ज्ञानं किम्।

२३. घटगन्धप्रत्यक्षज्ञाने कः सन्निकर्षः।

२४. गुणत्वग्रहणे कः सन्निकर्षः।

२५. अभावग्रहणे कः सन्निकर्षः।





## पाठसारः

अस्मिन् पाठे प्रत्यक्षप्रमाणस्य विविधाः प्रकाराः आलोचिताः। तत्रैव प्रसङ्गात् अन्तःकरणस्य वृत्तिभेदात् बुद्धिः मनः अहंकारः चित्तम् इत्यादीनि नामानि कथं भवन्ति इति विषयः उपन्यस्तः। प्रत्यक्षज्ञानस्य सविकल्पक-निर्विकल्पकभेदात् द्वैविध्यम्। जीवसाक्षि ईश्वरसाक्षि इति रूपेण प्रत्यक्षस्य भेदाः अपि उक्ताः। तत्र क्रमप्राप्तम् तत्त्वमसि इति महावाक्यात् कथं निर्विकल्पकम् ज्ञानं जायते इति व्याख्यातम्। प्रसङ्गात् जीवः जीवसाक्षी ईश्वरः ईश्वरसाक्षी इति विषये सविस्तरम् आलोचनं विहितम्।

प्रत्यक्षज्ञानं प्रकारान्तरेण इन्द्रियजन्यम् इन्द्रियाजन्यं चेति द्विविधम् इति उपस्थाप्य प्रसङ्गात् सन्निकर्षभेदाः स्पष्टीकृताः।



## पाठान्तप्रश्नाः

१. चैतन्याभिव्यञ्जिका वृत्तीः विवृणुत।

२. चैतन्याभिव्यञ्जिकवृत्तेः चातुर्विध्यम् उपपादयत।

३. सविकल्पकम् ज्ञानं प्रकटयत।

४. निर्विकल्पकम् ज्ञानं प्रकटयत।

५. जीवः विशदनीयः।

६. जीवसाक्षी विशदनीयः।

७. ईश्वरः वर्णनीयः।

८. ईश्वरसाक्षी वर्णनीयः।

९. ब्रह्मा विष्णुः महेश्वरः एते के।

१०. सन्निकर्षमाश्रित्य प्रबन्धम् आरचयत।

११. इन्द्रियजन्यादिप्रत्यक्षज्ञानप्रकारान् वर्णयत।

१२. इन्द्रियं विषयदेशं गच्छति न वेति विमृश्यत।



## पाठगतप्रश्नानाम् उत्तराणि

१. चैतन्याभिव्यञ्जिका वृत्तिः चतुर्धा। १) संशयः २) निश्चयः ३) गर्वः ४) स्मरणम् इति भेदात्।

२. निश्चयाकारा अन्तकरणस्य वृत्तिः हि बुद्धिः।

३. गर्वाकारा अभिमानात्मिका अन्तःकरणस्य वृत्तिः हि अहङ्कारः।

४. स्मृत्याकारा अन्तःकरणवृत्तिः चित्तम्।



५. संशयाकारा अन्तःकरणवृत्तिः हि मनः।

६. मनो बुद्धिरहङ्कारश्चित्तं करणान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया इमे॥

७. बुद्धेः विषयः अपूर्वः भवति, चित्तस्य विषयस्तु पूर्वानुभूतः, नापूर्वः इति विषयभेदात् बुद्धिचित्तयोः भेदः।

८. मनसः विषयः बाह्यः आभ्यन्तरः च। अङ्ककारस्य तु अनात्मोपरक्तः आत्मा एव इति मनोऽहङ्कारयोः विषयभेदः।

९. वैशिष्ट्यावगाहि ज्ञानं सविकल्पकम्।

१०. अयं घट इति सविकल्पकज्ञाने घटघटत्वयोः तादात्म्यसम्बन्धः भासते। अयं सम्बन्ध एव वैशिष्ट्यम्।

११. घटज्ञानवान् अहम् इति सविकल्पकज्ञाने आत्मज्ञानयोः तादात्म्यसम्बन्धः एव वैशिष्ट्यं भासते।

१२. संसर्गानवगाहि ज्ञानम् निर्विकल्पकम्।

१३. सोऽयं देवदत्तः इति वाक्याद् निर्विकल्पकं ज्ञानम् जायते।

१४. तत्त्वमसि इति महावाक्याद् निर्विकल्पकं ज्ञानम् जायते।

१५. अन्तःकरणावच्छिन्नचैतन्यं जीवः कथ्यते।

१६. अन्तःकरणोपहितं चैतन्यं जीवसाक्षी कथ्यते।

१७. भिन्नः।

१८. मायावच्छिन्नं चैतन्यम् ईश्वरः कथ्यते।

१९. मायोपिहतं चैतन्यम् ईश्वरसाक्षी।

२०. प्रत्यक्षज्ञानं द्वितीयप्रकारेण द्विविधम् इन्द्रियजन्यम् इन्द्रियाजन्यं चेति भेदात्।

२१. अविद्यावृत्तिः।

२२. यद् ज्ञानम् इन्द्रियजन्यया प्रमाणवृत्त्या न जायते अपि तु अविद्यावृत्त्या जायते तद् ज्ञानम् इन्द्रियाजन्यज्ञानम्।

२३. संयुक्ततादात्म्यसन्निकर्षः।

२४. संयुक्ताभिन्नतादात्म्यसम्बन्धः।

२५. न कोऽपि सन्निकर्षः।

॥ इति सप्तमः पाठः ॥

## ८

# अनुमानखण्डः उपमानखण्डः च

## प्रस्तावना

पूर्वपाठेषु प्रत्यक्षप्रमा प्रत्यक्षप्रमाणम् ज्ञानगतप्रत्यक्षत्वस्य प्रयोजकम् , विषयगतप्रत्यक्षत्वस्य प्रयोजकम्, प्रत्यक्षप्रमाप्रकाराः इति एते विषया आलोचिताः। व्यभिचारादर्शनेन सहचारदर्शनेन च दृष्टान्तेषु हेतुः साध्यव्याप्यः इति व्याप्तिनिश्चयः भवति। अयं निश्चयः बाहुल्येन प्रत्यक्षप्रमाणेन भवति। ततश्च क्वचित् पक्षे हेतुं दृष्ट्वा व्याप्तिसंस्काराद् अनुमितिः जायते। हेतोः प्रत्यक्षम् अनुमानस्य उपजीव्यम्। प्रत्यक्षात्मकस्य उपजीव्यस्य आदौ निरूपणं कृतम्। अनुमानद्वारा प्रपञ्चमिथ्यात्वं साधनीयम् अस्ति। अतः अत्र अनुमानं प्रतिपाद्यते। श्रुत्या प्रपञ्चस्य मिथ्यात्वम् तु उक्तमेवास्ति तथापि केचित् आगमप्रामाण्यं नाङ्गीकुर्वन्ति। परन्तु अनुमानम् अभ्युपगच्छन्ति। तेषां कृते प्रपञ्चमिथ्यात्वं प्रतिपादनीयम् इति अत्र अनुमानोपन्यासः।

अनुमितिकरणम् अनुमानं स्वार्थपरार्थभेदेन द्विविधम्। प्रायः नैयायिकाः अनुमाने रताः। एवञ्च तेषां मतेन सह वेदान्तिनां विरोधः इति हेतोः द्वयोरपि अनुमानप्रक्रियाज्ञानम् इष्टम्। अतः अत्र पाठे प्रथमम् न्यायसम्मतः स्वार्थानुमानक्रमः प्रदर्शितः। ततः परं वेदान्तसम्मतः अनुमानक्रमः प्रतिपादितः।

अनुमितिकरणम् अनुमानं तदैव ज्ञातुं शक्यं यदि अनुमितिज्ञानं स्यात्। अतः आदौ कानुमितिः इति विषयः प्रतिपादयिष्यते। ततश्च परार्थानुमानं प्रदर्शयिष्यते। अनुमानस्य हृदयं हि व्याप्तिः। अतः व्याप्तिविषयः सविस्तरं प्रतिपादयिष्यते। ततश्च सद्धेतून् उक्त्वा जगन्मिथ्यात्वं प्रतिपादयिष्यते। तत्रापि मिथ्यात्वस्य लक्षणं विना जगन्मिथ्यात्वम् बोद्धुं न शक्यते इति हेतोः मिथ्यात्वलक्षणमपि परिष्कृतम्।

अनुमानोत्तरम् उपमानप्रमाणम् अस्मिन्नेव पाठे प्रतिपादितम्। सादृश्यज्ञानं विना उपमानप्रमाणम् सम्यग् न ज्ञायते इति तत्र आदौ सादृश्यं प्रतिपादितम् अस्ति।



## उद्देश्यानि

अस्य पाठस्य अध्येता -

- न्यायसम्मतम् अनुमानक्रमं ज्ञास्यति।
- वेदान्तसम्मतम् अनुमानक्रमं ज्ञात्वा अनुमानं कर्तुं समर्थो भवेत्।
- द्वयोः दर्शनयोः मते भेदम् अवगच्छेत्।



- स्वार्थानुमानं परार्थानुमानं च ज्ञास्यति।
- व्याप्तिं जानीयात्।
- सद्धेतूम् अवगच्छेत्।
- मिथ्यात्वलक्षणं ज्ञात्वा जगन्मिथ्यात्वं कथमिति जानीयात्।
- सादृश्यं ज्ञात्वा उपमानम् अवगच्छेत्।

## ८.१) स्वार्थानुमानम्

अनुमितिकरणम् अनुमानम्। अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या। स्वार्थानुमानपरार्थानुमानभेदेन अनुमानं द्विविधम्। तत्रादौ स्वार्थानुमानं किमिति उपस्थाप्यते। अनुमानक्रमविषये नैयायिकवेदान्तिनोः मतभेदाः सन्ति। तत्रादौ नैयायिकसम्मतः अनुमानक्रमः प्रदर्श्यते।

### न्यायसम्मतः स्वार्थानुमानक्रमः

स्वस्य अनुमातुः अर्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपः यस्मात् तत् स्वार्थानुमानम्। तस्य क्रमः स्वार्थानुमानक्रमः।

लोके व्यवहारकाले यत्र यत्र धूमः तत्र तत्र वह्निः इति सहचारदर्शनम्, एवञ्च व्यभिचारस्य अदर्शनं भवति तदा धूमः वह्निव्याप्यः इति व्याप्तिविषयकं प्रत्यक्षं ज्ञानं जायते। धूमः अत्र व्याप्यः, वह्निः व्यापकः, वह्निव्याप्तिः धूमे। एवञ्च धूमः लिङ्गं हेतुर्वा उच्यते। व्याप्तिज्ञाने अस्मिन् लिङ्गं विषयः अस्ति। अतः इदं ज्ञानं प्रथमलिङ्गपरामर्शः इत्यपि कथ्यते।

यस्य जनस्य धूमः वह्निव्याप्यः इति अनुभवः अस्ति स कदाचित् पर्वतसमीपं गच्छति। तदा पर्वते अविच्छिन्नां धूमरेखां पश्यति। तद् धूमवान् पर्वतः इति ज्ञानम्। इदमेव पक्षधर्मताज्ञानम्। इदं ज्ञानं द्वितीयलिङ्गपरामर्शः कथ्यते। तत्र पर्वतस्य दृश्यभागे क्वापि वह्निं न पश्यति। तदा तस्य संशयः उदेति यत् पर्वतः वह्निमान् न वा इति। अर्थात् पर्वते वह्निसन्देहः जायते। अतः पर्वतः पक्षः इति कथ्यते। धूमदर्शनेन तस्य स्मृतिः जायते यत् यत्र यत्र धूमः तत्र तत्र वह्निः इति अर्थात् धूमः वह्निव्याप्यः इति। इयं व्याप्तिस्मृतिः कथ्यते। ततः च योऽयं वह्निव्याप्यः धूमः, तादृशधूमवान् पर्वतः अर्थात् वह्निव्याप्यधूमवान् पर्वतः इति ज्ञानं जायते। इदं ज्ञानमेव परामर्शः कथ्यते। अयं परामर्शः तृतीयः लिङ्गपरामर्शः कथ्यते। ततः पर्वतो वह्निमान् इति ज्ञानम् जायते। इदं ज्ञानम् अनुमितिः कथ्यते।

पर्वतो वह्निमान् धूमात् इति वाक्यात् पर्वतो वह्निमान् इति अनुमितिः जायते। अनुमितौ पर्वतम् उद्दिश्य वह्निः विधीयते। अतः पर्वतः उद्देश्यः, वह्निः विधेयः। अनुमित्युद्देश्यः पक्षः। अनुमितिविधेयः साध्यः। धूमः लिङ्गं हेतुः वा।

पर्वतो वह्निमान् धूमात् यथा महानसम् इत्यनुमानप्रयोगस्थले पर्वतः पक्षः, वह्निः साध्यः, धूमो हेतुः, महानसं च दृष्टान्तो वर्तते। **तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारलक्षणम्**। तत्पदेन अत्र व्याप्तिज्ञानं ग्राह्यम्। एवम् अत्र व्याप्तिज्ञानजन्यः परामर्शः, परामर्शजन्या च अनुमितिः अस्ति। एवम् व्याप्तिज्ञानजन्यत्वं व्याप्तिज्ञानजन्यानुमितिजनकत्वं च परामर्शे। अतः परामर्शो व्यापारो भवति। व्याप्तिज्ञानं



च असाधारणं कारणम्। अतः व्यापारवद् असाधारणं कारणं यद् व्याप्तिज्ञानं तद् अनुमितिं प्रति करणं भवति। इत्थम् व्याप्तिज्ञानं अनुमितिकरणम् अनुमानम्। अनुमितेः करणमेव अनुमानप्रमाणमिति अभिधीयते। अत एव व्याप्तिज्ञानमेव अनुमानप्रमाणमिति। इदं न्यायमतेन स्वार्थानुमानम्।

येन क्रमेण अनुमितिः जायते स क्रमः अधः संक्षेपेण प्रकटितः अस्ति।

| | | |
|---|---|---|
| १. साहचर्यानुभवः | → यत्र यत्र हेतुः तत्र तत्र साध्यम्। | यत्र यत्र धूमः तत्र तत्र वह्निः। |
| २. व्याप्तेरनुभवः | → साध्यव्याप्यो हेतुः। | वह्निव्याप्यो धूमः। |
| ३. पक्षधर्मताज्ञानम् | → हेतुमान् पक्षः। | धूमवान् पर्वतः। |
| ४. व्याप्तिस्मरणम् | → साध्यव्याप्यो हेतुः। | वह्निव्याप्यो धूमः। |
| ५. परामर्शः | → साध्यव्याप्यहेतुमान् पक्षः। | वह्निव्याप्यधूमवान् पर्वतः। |
| ६. अनुमितिः | → पक्षः साध्यवान्। | पर्वतो वह्निमान्। |

### वेदान्तसम्मतः स्वार्थानुमानक्रमः

जगति यत्र यत्र धूमः तत्र तत्र वह्निः इति सहचारदर्शनम्, एवञ्च यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभावः इति व्यतिरेकसहचारस्य दर्शनं भवति तदा धूमः वह्निव्याप्यः इति व्याप्तिविषयकः प्रत्यक्षः अनुभवः जायते। अयं व्याप्तेः अनुभवः, अयमेव व्याप्तिज्ञानमिति नाम्ना प्रसिद्धः। अयं प्रथमलिङ्गपरामर्शः कथ्यते।

धूमः वह्निव्याप्यः इति व्याप्त्यनुभववान् जनः कदाचित् पर्वतादिसमीपं गच्छति। तत्र धूमवान् पर्वतः इति धूमज्ञानं तस्य भवति। इदं पक्षधर्मताज्ञानम्। अनुमितिं प्रति इदं ज्ञानमपि एकं कारणम्। इदं ज्ञानं द्वितीयलिङ्गपरामर्शः कथ्यते। तत्र पर्वतस्य दृश्यभागे क्वापि वह्निं न अपश्यन् संशेते यत् पर्वतः वह्निमान् न वा इति। अर्थात् पर्वते वह्निसन्देहः जायते। अतः पर्वतः पक्षः इति कथ्यते। धूमदर्शनेन तस्य व्याप्तिसंस्कारः उद्बुद्धो भवति। ततः पर्वतो वह्निमान् इति पर्वते वह्निनिश्चयः जायते। इदं ज्ञानम् अनुमितिः कथ्यते।

पर्वतो वह्निमान् धूमात् यथा महानसम् इत्यनुमानप्रयोगस्थलम्। अत्र व्याप्त्यनुभवजन्यः व्याप्तिसंस्कारः उद्बुद्धः सन् अनुमितिं जनयति। एवम् व्याप्तिज्ञानजन्यत्वं व्याप्तिज्ञानजन्यानुमितिजनकत्वं च उद्बुद्धे व्याप्तिसंस्कारे। अतः उद्बुद्धः व्याप्तिसंस्कारः व्यापारो भवति। व्याप्तिज्ञानं च असाधारणं कारणम्। अतः व्यापारवद् असाधारणं कारणं यद् व्याप्तिज्ञानं तद् अनुमितिं प्रति करणं भवति। इत्थम् व्याप्तिज्ञानं अनुमितिकरणम् अनुमानम्। अनुमितेः करणमेव अनुमानप्रमाणमिति अभिधीयते। अत एव व्याप्तिज्ञानमेव अनुमानप्रमाणमिति। इदं वेदान्तमतेन स्वार्थानुमानम्।

न्यायमते पक्षधर्मताज्ञानेन व्याप्तिस्मृतिः भवति। ततः साध्यव्याप्यहेतुमान् पक्षः इति परामर्शः जायते। ततः अनुमितिः जायते।



वेदान्तमते पक्षधर्मताज्ञानेन व्याप्तिसंस्कारः उद्बोधति। ततः अनुमितिः जायते। व्याप्तिस्मृतिः, साध्यव्याप्यहेतुमान् पक्षः एवंरूपः परामर्शः इति एतद्वयं नैव जायते।

वेदान्तमते येन क्रमेण स्वार्था अनुमितिः जायते स क्रमः अधः संक्षेपेण प्रकटितः अस्ति।

| | | |
|---|---|---|
| १. साहचर्यानुभवः | → यत्र यत्र हेतुः तत्र तत्र साध्यम्। | यत्र यत्र धूमः तत्र तत्र वह्निः। |
| २. व्याप्तेरनुभवः | → साध्यव्याप्यो हेतुः। | वह्निव्याप्यो धूमः। |
| ३. पक्षधर्मताज्ञानम् | → हेतुमान् पक्षः। | धूमवान् पर्वतः। |
| ४. अनुमितिः | → पक्षः साध्यवान्। | पर्वतो वह्निमान्। |



## पाठगतप्रश्नाः -१

१. कानुमितिः।

२. अनुमानभेदान् लिखत।

३. न्यायमते पर्वतो वह्निमान् धूमात् इत्यत्र अनुमित्याकारः कः।

४. प्रथमलिङ्गपरामर्शः कः।

५. कः द्वितीयलिङ्गपरामर्शः।

६. अनुमितिजनने व्याप्तिज्ञानस्य कः व्यापारः।

## ८.२) अनुमितिः

अनुमितिकरणम् हि अनुमानम्। यावद् अनुमितिः का इति न ज्ञायते तावत् अनुमानं किमिति बोद्धुं न शक्यते। अतः अनुमितिः का इति प्रतिपाद्यते।

**व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या हि अनुमितिः** इति उक्तमेव।

तद्यथा चैत्रः देवदत्तस्य पुत्रः। चैत्रः गुरुकुलस्य छात्रः। चैत्रः मगधस्य नागरिकः। एवं चैत्रे चैत्रत्वं पुत्रत्वं छात्रत्वं नागरिकत्वं चेति विविधाः धर्माः सन्ति। परन्तु चैत्रे छात्रत्ववशादेव स गुरुकुले पठितुं शक्नोति, न तु देवदत्तपुत्रत्ववशाद्। चैत्रे मागधत्वम् अस्ति। अतः एव स मगधदेशे उषितुं शक्नोति, व्यवहर्तुं शक्नोति, न तु छात्रत्वकारणेन। एवं एकोऽपि चैत्रः तस्य तत्तद्धर्मवशाद् तत्तत्करणे समर्थो भवति।

व्याप्तिज्ञानं विभिन्नधर्मवशाद् विभिन्नकार्याणि जनयति। तत्र व्याप्तिज्ञानत्वधर्मवशात् व्याप्तिज्ञानम् अनुमितिं जनयति। इदमेव अधः सविस्तरम् उपन्यस्यते।

व्याप्तिज्ञानाद् व्याप्तिज्ञानानुव्यवसायः व्याप्तिविषयकस्मृतिः व्याप्तिज्ञानध्वंसः अनुमितिः चेति जायन्ते। एवं चत्वारि कार्याणि प्रति व्याप्तिज्ञानमेकमेव कारणमस्ति। व्याप्तिज्ञानं जनकम् , अनुव्यवसायादिकम् च जन्यमस्ति। व्याप्तिज्ञाने जनकता, अनुव्यवसायादिषु च जन्यतास्ति। यदि जनकं



भिन्नं भिन्नं भवति तदा जनकतापि भिन्ना भिन्ना भवति। परन्तु व्याप्तिज्ञानमेकमेव जनकम्। अतः व्याप्तिज्ञाने एका एव जनकता। यदि जन्यं विभिन्नं भवति तर्हि जन्यतापि विभिन्ना भवति। अनुव्यवसायः स्मृतिः ध्वंसः अनुमितिः इति चत्वारि कार्याणि जन्यानि। अतः तेषु विद्यमाना जन्यता भिन्ना, न तु एका एव। एवञ्च व्याप्तिज्ञाने जनकता अस्ति, अतः व्याप्तिज्ञानानुव्यवसाये, व्याप्तिस्मृतौ, व्याप्तिज्ञानध्वंसे, अनुमितौ च जन्यता अस्ति। अतः जनकता जन्यताया निरूपिका अस्ति। व्याप्तिज्ञाननिष्ठा या जनकता तन्निरूपिता जन्यता अनुव्यवसाये स्मृतौ ध्वंसे अनुमितौ चास्ति। अतः व्याप्तिज्ञाननिष्ठ-जनकता-निरूपित-जन्यतावान् अनुव्यवसायः। व्याप्तिज्ञाननिष्ठ-जनकता-निरूपित-जन्यतावती स्मृतिः। व्याप्तिज्ञाननिष्ठ-जनकता-निरूपित-जन्यतावान् ध्वंसः। व्याप्तिज्ञाननिष्ठ-जनकता-निरूपित-जन्यतावती अनुमितिः।

व्याप्तिज्ञानम् तु अनुभवः। प्रथमानुभवः व्यवसायः कथ्यते। व्याप्तिज्ञानवानहम् इति व्याप्तिज्ञानविषयकः अनुव्यवसायः जायते। तस्मिन् अनुव्यसाये व्याप्तिज्ञानं विषयः भवति। व्याप्तिज्ञानं विषयः अस्ति, अतः एव अनुव्यवसायः जायते। अर्थात् व्याप्तिज्ञानं विषयत्वेन अनुव्यवसायं प्रति जनकं भवति।

व्याप्तिज्ञानम् अनुभवः। तस्मिन् विषयः व्याप्तिः अस्ति। यदा व्याप्तिस्मृतिः भवति तदा स्मृतेः विषयः अपि व्याप्तिः। अनुभवस्य यो विषयः स एव स्मृतेरपि विषयः। यदि अनुभवस्य विषयः स्मृतिविषयाद् भिन्नः तर्हि तां स्मृतिं प्रति सः अनुभवः कारणं न भवति। यदि घटानुभवः न स्यात् तर्हि घटस्मृतिः न स्यात्। व्याप्तिस्मृतेः यो विषयः स एव व्याप्तिज्ञानात्मकस्य अनुभवस्यापि विषयः अस्ति। अतः व्याप्तिज्ञानात्मकः अनुभवः स्मृतिं प्रति जनकः भवति। एवं व्याप्तिज्ञानम् व्याप्तिविषयकानुभवत्वेन रूपेण व्याप्तिस्मृतिं प्रति जनकम् भवति।

व्याप्तिज्ञानं व्याप्तिज्ञानत्वेन अनुमितिं प्रति कारणं भवति। व्याप्तिज्ञानध्वंसं प्रति व्याप्तिज्ञानं प्रतियोगित्वेन रूपेण कारणं भवति। अर्थात् व्याप्तिज्ञानं प्रतियोगि अस्ति, अत एव तस्य ध्वंसो भवति। ध्वसं प्रति प्रतियोगिनः कारणता इति हि नियमः।

**येन रूपेण व्याप्तिज्ञानं जनकं तेन रूपेण व्याप्तिज्ञाननिष्ठजनकतायाः अवच्छेदकं व्यावर्तकं भेदकं वा भवति।** अत एव व्याप्तिज्ञाननिष्ठजनकतायाः अवच्छेदकाः चत्वारः धर्माः। जनकता च चतुर्भिः धर्मैः अवच्छिन्ना। एवं व्याप्तिज्ञाने विषयत्वावच्छिन्ना जनकता, अनुभवत्वावच्छिन्ना जनकता, व्याप्तिज्ञानत्वावच्छिन्ना जनकता, प्रतियोगित्वाच्छिन्ना जनकता इति चतस्रः जनकताः सन्ति। तादृशजनकताचतुष्टयनिरूपिताः जन्यताः अपि चतस्रः भवन्ति। ताः हि विषयत्वावच्छिन्न-जनकता-निरूपिता जन्यता। अनुभवत्वावच्छिन्न-जनकता-निरूपिता जन्यता। व्याप्तिज्ञानत्वावच्छिन्न-जनकता-निरूपिता जन्यता। प्रतियोगित्वावच्छिन्न-जनकता-निरूपिता जन्यता चेति।

व्याप्तिज्ञानजन्यानुव्यवसायनिष्ठजन्यतां प्रति व्याप्तिज्ञाननिष्ठविषयत्वावच्छिन्न-जनकता प्रयोजिका भवति।



व्याप्तिज्ञानजन्या या व्याप्तिस्मृतिः तन्निष्ठजन्यतां प्रति व्याप्तिज्ञाननिष्ठानुभवत्वावच्छिन्न-जनकता प्रयोजिका भवति।

व्याप्तिज्ञानजन्यानुमितिनिष्ठजन्यतां प्रति व्याप्तिज्ञाननिष्ठा व्याप्तिज्ञानत्वावच्छिन्न-जनकता प्रयोजिका भवति।

व्याप्तिज्ञानजन्यध्वंसनिष्ठजन्यतां प्रति व्याप्तिज्ञाननिष्ठप्रतियोगित्वावच्छिन्न-जनकता प्रयोजिका भवति।

इत्थं व्याप्तिज्ञानजन्या या व्याप्तिस्मृतिः, तन्निष्ठजन्यतां प्रति केवलं व्याप्तिज्ञाननिष्ठा अनुभवत्वावच्छिन्ना जनकता एव प्रयोजिका। अत एव अनुभवत्वाच्छिन्नजनकतानिरूपिता जन्यता केवलम् व्याप्तिस्मृतौ एव वर्तते, नानुव्यवसाये, नानुमितौ, न वा ध्वंसे।

तथैव व्याप्तिज्ञानजन्या या अनुमितिः, तन्निष्ठजन्यतां प्रति केवलं व्याप्तिज्ञाननिष्ठा व्याप्तिज्ञानत्वावच्छिन्ना जनकता एव प्रयोजिका। अत एव व्याप्तिज्ञानत्वावच्छिन्नजनकतानिरूपिता जन्यता केवलम् अनुमितौ एव वर्तते, नानुव्यवसाये, न स्मृतौ, नापि ध्वंसे।

**यत् कार्यं प्रति यद् वस्तु येन रूपेण अर्थात् येन धर्मेण विशिष्टं सत् जनकं भवति, तद्वस्तुनिष्ठा तद्धर्मावच्छिन्ना या जनकता तन्निरूपिता जन्यता तस्मिन् कार्ये एव तिष्ठतीति नियमः।**

**समन्वयः**- अनुमितिं प्रति व्याप्तिज्ञानं व्याप्तिज्ञानत्वेन रूपेण, अर्थाद् व्याप्तिज्ञानत्वविशिष्टं सत् जनकं भवति। व्याप्तिज्ञाननिष्ठा व्याप्तिज्ञानत्वावच्छिन्ना या जनकता तन्निरूपिता जन्यता अनुमितौ एव तिष्ठति, अन्यत्र नैव तिष्ठतीति

अत एव व्याप्तिज्ञानत्वावच्छिन-जनकतानिरूपित-जन्यतावद् ज्ञानम् अनुमितिः। एवञ्च **व्याप्तिज्ञानत्वावच्छिन-जनकतानिरूपित-जन्यतावज्ज्ञानत्वं हि अनुमितेः लक्षणम्।**

## अनुमितिलक्षणस्य दलकृत्यम्

प्रोक्तस्य लक्षणस्य दलकृत्यमधस्तात् प्रस्तूयते।

यदि **ज्ञानत्वम्** इति एतावन्मात्रम् अनुमितिलक्षणं चेद् ब्रह्मणि अतिव्याप्तिः, ब्रह्मणि ज्ञानत्वात्। सत्यं ज्ञानमनन्तं ब्रह्म इति हि श्रुतिः। तद्वारणाय **जन्यतावज्ज्ञानत्वम्** इति एतावद् अनुमितिलक्षणं क्रियते। तेन नातिव्याप्तिः। ज्ञानस्वरूपं ब्रह्म जन्यं नास्ति। अतः तन्निष्ठं ज्ञानत्वं न जन्यतावज्ज्ञानत्वम्। अतो नातिव्याप्तिः।

यदि जन्यतावज्ज्ञानत्वम् इति एतावन्मात्रं लक्षणं क्रियते तर्हि जन्यप्रत्यक्षज्ञाने अतिव्याप्तिः। तस्यापि जन्यतावज्ज्ञानत्वात्। तद्वारणाय **व्याप्तिज्ञाननिष्ठजनकतानिरूपित-जन्यतावज्ज्ञानत्वम्** इति अनुमितिलक्षणं कर्तव्यम्। यद्यपि जन्यप्रत्यक्षज्ञाने जन्यतावज्ज्ञानत्वमस्ति, तथापि तत्तु इन्द्रियनिष्ठजनकतानिरूपित-जन्यतावज्ज्ञानत्वम् अस्ति, न तु व्याप्तिज्ञाननिष्ठजनकतानिरूपित-जन्यतावज्ज्ञानत्वम्। अतो नातिव्याप्तिः।



व्याप्तिज्ञाननिष्ठजनकतानिरूपित-जन्यतावज्ज्ञानत्वम् इति अनुमितिलक्षणं क्रियते चेत् अनुव्यवसाये व्याप्तिस्मृतौ चातिव्याप्तिः। अनुव्यवसायः व्याप्तिस्मृतिश्च व्याप्तिज्ञानात् जायेते। अतः तयोः व्याप्तिज्ञाननिष्ठजनकतानिरूपित-जन्यतावज्ज्ञानत्वम् अस्ति। अतः अतिव्याप्तिः। तद्वारणाय **व्याप्तिज्ञानत्वावच्छिन्न-जनकतानिरूपित-जन्यतावज्ज्ञानत्वम्** अनुमितेः लक्षणम् कर्तव्यम्। तेन नातिव्याप्तिः। तथाहि अनुमितिं प्रति व्याप्तिज्ञानं व्याप्तिज्ञानत्वेन रूपेण, व्याप्तिज्ञानत्वविशिष्टं सत् जनकं भवति। व्याप्तिज्ञाननिष्ठा व्याप्तिज्ञानत्वावच्छिन्ना या जनकता तन्निरूपिता जन्यता अनुमितौ एव तिष्ठति, न तु अनुव्यवसाये, नापि व्याप्तिस्मृतौ वा। अतो व्याप्तिज्ञानत्वावच्छिन्न-जनकतानिरूपित-जन्यतावज्ज्ञानत्वस्य अनुव्यवसाये, व्याप्तिस्मृतौ चाभावान्नातिव्याप्तिः।



## पाठगतप्रश्नाः -२

७. स्वध्वंसं प्रति व्याप्तिज्ञानं केन रूपेण कारणं भवति।

८. अनुमितिं प्रति व्याप्तिज्ञानं केन रूपेण कारणं भवति।

९. व्याप्तिस्मृतिं प्रति व्याप्तिज्ञानं केन रूपेण कारणं भवति।

१०. व्याप्तिज्ञानत्वावच्छिना व्याप्तिज्ञाननिष्ठा या जनकता तन्निरूपिता जन्यता कस्मिन्।

११. अनुमितेः निष्कृष्टं लक्षणं किम्।

## ८.३) परार्थानुमानम्

यस्य पर्वतो वह्निमान् इति निश्चयः अस्ति तं प्रति कश्चिदपरः प्रतिवादी पर्वते वह्निं सन्दिहानः पृच्छति यद् पर्वतः वह्निमान् न वा। निश्चयवान् जनः सन्दिहानस्य संशयनिवारणाय अवयववाक्यप्रयोगेण अनुमानप्रमाणं प्रदर्शयति। इदं परार्थानुमानम्। परस्य अर्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपः यस्मात् तत् परार्थानुमानम्। अनेन परार्थानुमानेन प्रतिवादिनः संशयनिवृत्तिः भवति, किञ्च साध्यनिश्चयः जायते। अयं निश्चयः एव परार्थानुमितिः कथ्यते।

परार्थानुमितिजननाय एकं वाक्यं प्रयुज्यते। तस्य क्रमेण त्रयः अवयवाः सन्ति। स च क्रमः प्रदर्श्यते।

### परार्थानुमानक्रमः

यस्य साध्यनिश्चयः अस्ति सः अपरः यस्य साध्यसंशयः अस्ति तं परं प्रति क्रमेण वाक्यानि वदति। यथा -



**पर्वतः वह्निमान्।** अयं प्रथमः अवयवः। इयं प्रतिज्ञा कथ्यते। अस्माद् वाक्यात् साध्यं किमिति ज्ञायते। यथा वह्निः साध्यः इति ज्ञायते। एवञ्च सन्दिग्धसाध्यवान् पर्वतः इति ज्ञानम् उत्पन्नम्। सन्दिग्धसाध्यस्य आश्रयः एव पक्षः कथ्यते। अतः प्रतिज्ञावाक्यात् पक्षज्ञानमपि जायते। पक्षज्ञानं विना पक्षधर्मताज्ञानं न सम्भवति। अतः पक्षज्ञानं पक्षधर्मताज्ञानस्य प्रयोजकं भवति।

प्रतिज्ञां श्रुत्वा परः प्रतिवादी जिज्ञासति यद् पर्वतः वह्निमान् कुतः इति। केन कारणेन पर्वतः वह्निमान् इति वदसि इति तात्पर्यम्। तं जिज्ञासुं प्रति अपरः द्वितीयम् अवयवम् वदति **धूमवत्त्वाद्** इति। इदं पञ्चम्यन्तं पदम्। स्वार्थानुमाने धूमः एव हेतुः। परन्तु परार्थानुमाने परः धूमं न पश्यति, अतः धूमदर्शनेन वह्निं न प्रतिपद्यते, स तु धूमवत्त्वाद् इति पञ्चम्यन्तपदश्रवणात् वह्निं प्रतिपद्यते। अतः पञ्चम्यन्तं पदमेव हेतुः। अनेन प्रतिवादिनः ज्ञानं जायते यद् पर्वतः धूमवान् इति। अतः इदं ज्ञानं पक्षधर्मताज्ञानमिति कथ्यते। पञ्चम्यन्तं वाक्यं हेतुः इति कथ्यते। अतः द्वितीयः अवयवः हेतुः इति क्रमः।

स्यान्नाम धूमः पर्वते। ततः किम्। धूमः पर्वते अस्ति चेदस्तु। परन्तु तेन पर्वतः वह्निमान् इति कुतः अनुमेयमिति परः जिज्ञासुः। तं प्रति अपरः तृतीयम् अवयवं प्रयुङ्क्ते **यत्र यत्र धूमः तत्र तत्र वह्निः।** तथापि प्रतिवादी जिज्ञासति यत् एवं कुत्र दृश्यते। तदा तं प्रति वदति **यथा महानसम्** इति। तदा समग्रं वाक्यं भवति - **यत्र यत्र धूमः तत्र तत्र वह्निः यथा महानसम्।** अनेन वाक्येन श्रोतुः वह्निव्याप्यः धूमः इति व्याप्तिसंस्कारः उद्बुद्धो भवति। अयं तृतीयः अवयवः उदाहरणं कथ्यते। एवं प्रतिज्ञा हेतुः उदाहरणम् इति क्रमेण अवयवप्रयोगः क्रियते चेत् प्रतिवादिनः क्रमशः पक्षज्ञानं पक्षधर्मताज्ञानं व्याप्तिसंस्कारोद्बोधः च भवन्ति। ततः च पर्वतः वह्निमान् इति निश्चयः जायते। इदं ज्ञानम् अनुमितिः कथ्यते। परस्य इयं अनुमितिः सा परार्थानुमितिः कथ्यते। तां प्रति करणम् परार्थानुमानं कथ्यते। त्रयाणाम् अवयवानां समुदायः **न्यायः** इति कथ्यते। न्यायेन यद् अनुमानं जायते तद् न्यायप्रयोज्यानुमानं परार्थानुमानम्। एवञ्च न्यायेन यद् अनुमानं न जायते तद् न्यायाप्रयोज्यमनुमानं स्वार्थानुमानम्।

संक्षेपेण परार्थानुमानक्रमः इत्थम् -

प्रतिज्ञा - पर्वतः वह्निमान्।

हेतुः - धूमवत्त्वात्।

उदाहरणम् - यत्र यत्र धूमः तत्र तत्र वह्निः यथा महानसम्।

प्रतिज्ञाहेतूदाहरणानि इति त्रिभिः अवयवैः परार्थानुमितिः सम्भवति। अथवा उदाहरणोपनयनिगमानि इति त्रिभिः अवयवैः परार्थानुमितिः सम्भवति। तथाहि -

ते चावयवाः -

उदाहरणम् - यत्र यत्र धूमः तत्र तत्र वह्निः यथा महानसम्।

उपनयः - धूमवानयं पर्वतः।

निगमनम् - पर्वतः वह्निमान्।



### अनुमितौ कस्यांशस्य अनुमितित्वम्

पर्वतो वह्निमान् धूमात् इत्यादिकम् अनुमानस्थलम्। तत्र पर्वतो वह्निमान् इति अनुमितिः जायते। अनुमितिः परोक्षं ज्ञानम्, न तु प्रत्यक्षं ज्ञानम्। अत्र पर्वतः विशेष्यत्वेन, वह्निः प्रकारत्वेन, तयोः सम्बन्धः च संसर्गत्वेन भासते। पर्वतस्य इन्द्रियेण सन्निकर्षः भवति, वह्नेः न भवति। वृत्तेः बहिः गमनस्य हेतुः हि इन्द्रियस्य अर्थेन सह सन्निकर्षः। स च सन्निकर्षः पर्वतेन सह अस्ति, वह्निना सह नास्ति। अतः पर्वताकारा वृत्तिः भवति, वह्न्याकारा न भवति। विषयः हि पर्वतः, स उपाधिः। वृत्तिरपि उपाधिः। उपाधिद्वयम् एकदेशे अस्ति। अतः उपधेययोः चैतन्ययोः अभेदः भवति। परन्तु वह्निस्थले तथा एकदेशस्थत्वं नास्ति। अतः पर्वतो वह्निमान् इति स्थले पर्वतविषयं प्रत्यक्षं ज्ञानम् उत्पद्यते, वह्निविषये तु परोक्षं ज्ञानं उत्पद्यते। पर्वतो वह्निमान् इति अनुमितिर्हि पर्वतविशेष्यकं वह्निप्रकारकं ज्ञानम्। अनुमितेः वह्निप्रकारकांशः एव व्याप्तिज्ञानजन्यः। अतः तस्मिन्नंशे अनुमितित्वमस्ति। पर्वतविशेष्यकांशः तु इन्द्रियार्थसन्निकर्षजन्यः, न तु व्याप्तिज्ञानजन्यः। अतः पर्वतविशेष्यकांशे अनुमितित्वं नास्ति। अतः वह्निप्रकारक-पर्वतविशेष्यकानुमितेः सर्वांशे व्याप्तिज्ञानजन्यज्ञानत्वं नास्ति।



## पाठगतप्रश्नाः -३

१२. परार्थानुमाने कः परार्थः।

१३. वेदान्तिनां परार्थानुमाने कति अवयवाः।

१४. पर्वतो वह्निमान् धूमात् इत्यत्र कस्मिन्नंशे अनुमितित्वम्।

## ८.४) व्याप्तिः

व्याप्तिज्ञानाय केषाञ्चित् पारिभाषिकशब्दानां परिचयः सौकर्यावहः। अतः किञ्चित् प्रस्तूयते।

यस्मिन् भूतले घटोऽस्ति तत्र पटोऽपि वर्तते चेत् घटेन सह समानम् एकम् अधिकरणं यस्य सः घटसमानाधिकरणः पटः। अथवा यः तिष्ठति स समानाधिकरणः। सामानाधिकरण्यं च एकाधिकरणवृत्तित्वम्। समानाधिकरणः इत्यस्य अर्थः स्वाधिकरणे वर्तमानः इति। घटपटौ भूतले स्तः। तदा निम्नप्रकारेण वाक्यानि प्रयोक्तुं शक्यानि।

१. घटसमानाधिकरणः पटः। (घटाधिकरणवृत्तिः पटः)

२. घटसामानाधिकरण्यं पटे।

३. पटसमानाधिकरणः घटः।

४. पटसामानाधिकरण्यं घटे।



व्याप्तिलक्षणम् अन्ते समग्रम् उपस्थापितम् अस्ति। प्रारम्भतः लघुलक्षणं कृत्वा दोषादिकम् उद्भाव्य तस्य संशोधनं कृतमस्ति। अतः परिनिष्ठितं लक्षणम् केन कारणेन दीर्घमस्ति, प्रत्येकं दलानां का आवश्यकता अस्ति इति अत्र प्रकट्यते।

साध्यस्य अधिकरणे यो वर्तते स साध्यसमानाधिकरणः, तस्मिन् साध्यसामानाधिकरण्यम्। **साध्यसामानाधिकरण्यम्** इति व्याप्तिलक्षणं क्रियते। पर्वतो वह्निमान् धूमात् इति स्थले पक्षः पर्वतः, साध्यः वह्निः, हेतुः धूमः। महानसचत्वरादौ साध्यः वह्निः वर्तते। तत्रैव धूमः वर्तते। अतः वह्निसमानाधिकरणः धूमः, वह्निसामानाधिकरण्यं धूमे। साध्यसामानाधिकरण्यम् हि व्याप्तिरिति उक्तम्। व्याप्तिः धूमे। यस्मिन् हेतौ व्याप्तिः वर्तते एवञ्च यो हेतुः पक्षे तिष्ठति स हेतुः सद्धेतुः कथ्यते। व्याप्तिः यस्मिन् तिष्ठति स व्याप्यः भवति। अतः वह्निव्याप्यः धूमः।

तप्तायोगोलके वह्निः तिष्ठति किन्तु धूमः नास्ति। अतः वह्निसमानाधिकरणः धूमः नास्ति, एवञ्च वह्निसामानाधिकरण्यं धूमे नास्ति। अतः धूमे लक्षणगमनाभावात् अव्याप्तिः। तद्वारणाय **साधनाश्रयाश्रित-साध्यसामानाधिकरण्यं** व्याप्तिलक्षणं कर्तव्यम्। साधनमत्र हेतुः लिङ्गं वा। साधनस्य आश्रयः साधनाश्रयः। साधनाश्रये आश्रितः साधनाश्रयाश्रितः। साधनाश्रयाश्रितः यो साध्यः स साधनाश्रयाश्रितसाध्यः। तादृशसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः। एवं लक्षणे कृते उक्तस्थले नातिव्याप्तिः। अयोगोलके धूमो नास्ति। अतः अयोगोलकम् न धूमात्मकसाधनाश्रयः, किन्तु महानसचत्वरादिकम्। अयोगोलके विद्यमानो वह्निः साधनाश्रयाश्रितः नास्ति, महानसादौ विद्यमानः वह्निः साधनाश्रयाश्रितः अस्ति। एवञ्च धूमाश्रयाश्रितवह्निसामानाधिकरण्यं धूमे वर्तते इति न अव्याप्तिः। धूमस्य आश्रयः महानसादिकम्। महानसादौ आश्रितः वह्निः धूमाश्रयाश्रितो वह्निः। अस्य वह्नेः अधिकरणे महानसादौ धूमस्तु अस्ति एव। अतः अयं धूमः साधनाश्रयाश्रितसाध्यसमानाधिकरणः। तस्मिन् साधनाश्रयाश्रितसाध्यसामानाधिकरण्यं वर्तते। अतः अव्याप्तिः वारिता।

पर्वतो धूमवान् वह्नेः इति अनुमानस्थले पर्वतः पक्षः, धूमः साध्यः, वह्निः हेतुः साधनम्। वह्नेः आश्रयः यथा महानसादिकम् तथा तप्तायोगोलकमपि। धूमः अयोगोलके न वर्तते। धूमाभावस्य अधिकरणे वर्तमानो वह्निः साध्याभावाधिकरणे वर्तमानः असद्धेतुः भवति। वह्निः असद्धेतुः इति सिद्धम्। असद्धेतौ लक्षणं गच्छति चेदतिव्याप्तिः भवति। अत्र साधनं वह्निः। तस्याश्रयः महानसादिकम्। तस्मिन् आश्रितः धूमः। तद्धूमसामानाधिकरण्यं वह्नौ वर्तते। अतः साधनाश्रयाश्रितसाध्यसामानाधिकरण्यं वह्नौ वर्तते। अतः अतिव्याप्तिः। तद्वारणाय साधनस्य अशेषत्वं विशेषणं निवेशनीयम्। तदा **अशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यं** व्याप्तिलक्षणं भवति। अशेष अर्थात् यावत्साधनाश्रयाश्रितसाध्यसामानाधिकरण्यम् इत्यर्थः। तेन नातिव्याप्तिः। यत् साध्यं साधनस्य सर्वेषु आश्रयेषु वर्तते, तदेव यावत्साधनाश्रयाश्रितं साध्यं भवति। प्रकृते च साधनं वह्निः। तस्याश्रयः अयोगोलकम्। तस्मिन् धूमः नास्ति। अतः धूमः वह्नेः यावत्सु आश्रयेषु नास्ति। अतः अशेषवह्न्याश्रयाश्रितः धूमो नास्ति। तेन अशेषवह्न्याश्रयाश्रितधूमसामानाधिकरण्यं वह्नौ नास्ति इति नातिव्याप्तिः। एवम् **अशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यं व्याप्तिलक्षणम्**। यद्यपि व्याप्तिलक्षणे



नैके दोषाः भवन्ति, तेषां समानाधानाय महान् प्रयासः क्रियते। परन्तु स सर्वोऽपि प्रपञ्चः उन्नतकक्षासु अध्येयः।

व्याप्तिः कथं ज्ञायते। जगति यत्र यत्र धूमः तत्र तत्र वह्निः इति सहचारदर्शनम्, व्यभिचारस्य च अदर्शनं भवति तदा धूमः वह्निव्याप्यः इति व्याप्तिविषयकः प्रत्यक्षः अनुभवः जायते। अयं व्याप्तेः अनुभवः, अयमेव व्याप्तिज्ञानमिति नाम्ना प्रसिद्धः। व्याख्याता व्याप्तिः।

### सद्धेतुः

यस्मिन् हेतौ व्याप्तिः अस्ति एवञ्च यो हेतुः पक्षे वर्तते स हेतुः सद्धेतुः इति उक्तमेव। हेतुरेव लिङ्गमिति कथ्यते। लिङ्गम् अन्वयि एकप्रकारकमेव।



## पाठगतप्रश्नाः -४

१५. घटसमानाधिकरणः पटः इत्यस्य कः अर्थः।

१६. परिष्कृतं व्याप्तिलक्षणं किम्।

१७. कः सद्धेतुः।

१८. लिङ्गं कतिविधिम्।

## ८.४.१) जगन्मिथ्यात्वम्

नेह नानास्ति किञ्चन इत्यादिभिः बहुभिः श्रुतिभिः अर्थात् आगमप्रमाणेन सिद्ध्यति यद् जगत् मिथ्या इति। तथापि ये नास्तिकादयः आगमप्रामाण्यं नाङ्गीकुर्वन्ति किन्तु अनुमानं प्रमाणत्वेन अङ्गीकुर्वन्ति, तान् प्रति अपि बोधयितुम् अनुमानेन जगतः मिथ्यात्वं साध्यते। अद्वैतसाक्षात्कारे जगतः मिथ्यात्वस्य अनुमानस्य मुख्यं प्रयोजनम्।

तदनुमानं हि - **ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात्** इति। यदेवं तदेवम्, यथा शुक्तिरूप्यम् इति। इदमनुमानम् अत्र मुख्यम्। अस्य अनुमानस्य अधः मुख्यानुमानम् इति रूपेणापि क्वचिद् उल्लेखः करिष्यते। क्वचिद् मिथ्यात्वानुमानम् इत्यपि उल्लेखः भविष्यति।

अस्मिन्नुनुमाने 'ब्रह्मभिन्नं सर्वम्' हि पक्षः। मिथ्यात्वं हि साध्यम्। ब्रह्मभिन्नत्वं हि हेतुः। दृष्टान्ते यत्र यत्र ब्रह्मभिन्नत्वं तत्र तत्र मिथ्यात्वम् इति यदेवं तदेवम् इत्यस्यार्थः।

ब्रह्मभिन्नं सर्वम् इति अनुक्त्वा केवलं सर्वम् इति यदि पक्षः तर्हि तस्मिन् ब्रह्म अपि अन्तर्भवति। तेन ब्रह्मणि अपि मिथ्यात्वापत्तिः। अतः उक्तं ब्रह्मभिन्नम् इति।



हेतौ साध्यस्य व्याप्तिः अस्ति चेत् तेन हेतुना अन्यत्र साध्यम् अनुमातुं शक्यते। यथा धूमे यदि वह्नेः व्याप्तिः गृह्यते तर्हि अन्यत्र यत्र धूमः अस्ति तत्र वह्निः साधयितुं शक्यः। एवम् मिथ्यात्वस्य व्याप्तिः ब्रह्मभिन्नत्वे गृह्यते चेत् अन्यत्र यत्र ब्रह्मभिन्नत्वम् अस्ति तत्र मिथ्यात्वम् अस्ति इति अनुमानं कर्तुं शक्यते। अतः यदि केनापि प्रमाणेन मिथ्यात्वव्याप्यं ब्रह्मभिन्नत्वम् इति ज्ञानम् भवति न वेति परीक्षणीयम्। तत्र उदाहरणम् अस्ति शुक्तिरजतम्। शुक्तिरजतं ब्रह्मभिन्नम् इति स्पष्टम्। मिथ्या न वेति विचारणा। यदि शुक्तिरजते मिथ्यात्वं सिद्धं नास्ति तर्हि दृष्टान्तासिद्धिः दोषो जायते। शुक्तौ यद् रजतं भासते तत् शुक्तिरजतम्। दृष्टान्ते हेतुसाध्ययोः सहचारदर्शनेन व्याप्तिनिश्चयो भवति। परन्तु यदि दृष्टान्ते रजते मिथ्यात्वं न स्यात् तर्हि व्याप्तिनिश्चयो न भवेत्। अतः रजते मिथ्यात्वम् अस्ति न वेति विचारणा इति उक्तम्।

शुक्तौ रजतस्य कदाचित् प्रतीतिर्भवति। परन्तु इयं शुक्तिः इति रजतस्य अधिष्ठानस्य प्रत्यक्षज्ञानेन शुक्तिविषयकम् अज्ञानम्, अज्ञानकार्यं रजतं च निवर्तेते। तदा रजतस्य उपलब्धिः न भवति। ततः अनया अनुपलब्ध्या नात्र रजतम् इति रजताभावस्य ज्ञानं जायते। तेन रजते मिथ्यात्वं सिद्ध्यति। अतः शुक्तिरजतं मिथ्या ब्रह्मभिन्नत्वात् इति दृष्टान्तस्य असिद्धिः नास्ति। ततश्च मिथ्यात्वव्याप्यं ब्रह्मभिन्नत्वम् इति ज्ञानम् भवति। एवञ्च अन्यत्र ब्रह्मभिन्नत्वस्य दर्शनेन मिथ्यात्वम् अनुमातुं सुशकम्।

**आक्षेपः -**

प्रातिभासिकरजते यथा ब्रह्मभिन्नत्वम् अस्ति तथा अविद्याजन्यत्वम् दोषजन्यत्वं चास्ति। यतो हि प्रातिभासिकरजतस्य उपादानकारणं हि अविद्या एव। एवञ्च चक्षुरादिदोषवशादेव रजतं भासते। एवम् सर्वेषु प्रातिभासिकपदार्थेषु अविद्याजन्यत्वम् दोषजन्यत्वं चास्ति, मिथ्यात्वमपि अस्ति। अत्र यदि कश्चित् मिथ्यात्वव्याप्यं ब्रह्मभिन्नत्वमिति न जानाति, परन्तु मिथ्यात्वव्याप्यम् अविद्याजन्यत्वम् अथवा मिथ्यात्वव्याप्यम् दोषजन्यत्वम् इति व्याप्तिं जानाति। स जनः ब्रह्मभिन्नेषु अविद्याजन्यत्वरूपम् हेतुं दृष्ट्वा मिथ्यात्वम् अनुमिनोति। दोषजन्यरूपम् हेतुं दृष्ट्वा वा मिथ्यात्वम् अनुमिनोति। तथा सति ब्रह्मभिन्नत्वज्ञानं विनैव मिथ्यात्वज्ञानं जायते इति तर्हि कुतः ब्रह्मभिन्नत्वं हेतुत्वेन कल्प्यते इति आक्षेपः। तत्रोच्यते - अज्ञानजन्यम् प्रातिभासिकं रजतादिकं यथा मिथ्या तथा अनादि अज्ञानम् अपि मिथ्या। अतोऽन्यदार्तम् इति श्रुतेः। (अतः ब्रह्मणः अन्यद् भिन्नम् आर्तम् मिथ्या। ) अनया श्रुत्या ब्रह्मभिन्नं सर्वं मिथ्या इति प्रतिपाद्यते। रजते अज्ञानजन्यत्वम् दोषजन्यत्वं चास्ति परन्तु अज्ञाने अज्ञानजन्यत्वं दोषजन्यत्वं च नास्ति। यतो हि अज्ञानम् अनादि वर्तते। तद् जन्यं नास्ति। परन्तु तस्मिन् मिथ्यात्वम् अस्ति। तर्हि अज्ञानस्य मिथ्यात्वसाधनाय कश्चित् हेतुः कल्पनीयः एव। यथा रजतस्य मिथ्यात्वसाधने ब्रह्मभिन्नत्वम् अनङ्गीकृत्य अज्ञानजन्यत्वं दोषजन्यत्वं वा हेतुत्वेन अङ्गीकृतम् आक्षेपकर्त्रा तद्वत् एतद्द्वयम् अत्र मिथ्यात्वस्य साधकं नास्ति। परन्तु अज्ञाने ब्रह्मभिन्नत्वमस्ति। अतः अज्ञाने मिथ्यात्वसाधनाय यथा ब्रह्मभिन्नत्वम् हेतुत्वेन अङ्गीकर्तव्यमेव तथा अन्यत्रापि रजतादौ ब्रह्मभिन्नत्वम् एव हेतुत्वेन अङ्गीकृतं चेत् लाघवमपि अस्ति।



यावद् साध्यं यद् मिथ्यात्वं तत् किमिति न ज्ञायते तावत् कस्यापि पदार्थस्य मिथ्यात्वम् अनुमातुं न शक्यते। अतः आदौ मिथ्यात्वस्य लक्षणं प्रस्तूयते।

## ८.४.२) मिथ्यात्वम्

**स्वाश्रयत्वेन अभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वम् मिथ्यात्वस्य लक्षणम्।**

अत्र क्रमशः अस्य लक्षणस्य पदकृत्यम् प्रदर्श्यते। लक्षणस्य एकांशः अत्यन्ताभावप्रतियोगित्वम् इति। तमंशमादावादाय पदकृत्यम् उपन्यस्यते।

यदि **अत्यन्ताभावप्रतियोगित्वम्** इति एतावदेव मिथ्यात्वस्य लक्षणं तर्हि ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् इति मिथ्यात्वानुमाने सिद्धसाधनदोषो जायते।

घटः अनित्यः अवयवित्वात् इति अनुमाने अनित्यत्वं किमिति चेत् अनित्यत्वं हि कार्यत्वम्। तदा तदेव अनुमानम् घटः कार्यः अवयवित्वात् इति रूपेणापि वक्तुं शक्यते। तद्वत् मिथ्यात्वानुमानेऽपि क्रियते चेत् अनुमानाकारः इत्थम् भवति - ब्रह्मभिन्नं सर्वम् अत्यन्ताभावप्रतियोगि ब्रह्मभिन्नत्वात् इति। अत्र सिद्धसाधनत्वदोषः। स च कथम्। घटादिकम् एकत्र विद्यते चेत् अन्यत्र तस्य अत्यन्ताभावः भवति। अस्य अत्यन्ताभावस्य प्रतियोगि घटादिकम्। प्रतियोगित्वं च घटादौ। एवं घटादौ अत्यन्ताभावप्रतियोगित्वं सिद्धमेवास्ति। तस्य साधनार्थम् - ब्रह्मभिन्नं सर्वम् अत्यन्ताभावप्रतियोगि ब्रह्मभिन्नत्वात् इति अनुमानं सिद्धस्य साधनं करोतीति सिद्धसाधनत्वदोषः तस्य।

अतः मिथ्यात्वलक्षणे किञ्चित् संशोधनं क्रियते। तथाहि - **स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्** इति एतावल्लक्षणं क्रियते। यस्मिन् मिथ्यात्वं साधनीयं 'स्व'पदेन तस्य ग्रहणं कर्तव्यम्। घटादौ मिथ्यात्वं साधनीयम् इति स्वं घटादिकम्। स्वयं यस्मिन् आश्रये तादात्म्यसम्बन्धेन अस्ति, तस्मिन् आश्रये स्वस्य अत्यन्ताभावः कदापि न भवति। स्वस्य आश्रये विद्यमानस्य अत्यन्ताभावस्य स्वयं प्रतियोगि नास्ति। अतः स्वस्मिन् स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं न क्वचिदपि प्रसिद्धम्। अतः ईदृशं प्रतियोगित्वं न सिद्धम्। तेन प्रोक्तः सिद्धसाधनत्वदोषो न जायते। परन्तु ईदृशं प्रतियोगित्वम् अप्रसिद्धम् इति मिथ्यात्वानुमानस्य असम्भवदोषः अथवा साध्याप्रसिद्धिदोषः जायते। (अप्रसिद्धम् इत्यस्यार्थः यत् अलीकपदार्थः, तादृशपदार्थः नैव प्रमितः, नास्ति एव। तादृशपदार्थस्य अभावः केवलान्वयी इत्यपि कथ्यते।) मिथ्यात्वानुमाने मिथ्यात्वं साध्यम्। परन्तु स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् इति यदि मिथ्यात्वं तर्हि तादृशं मिथ्यात्वम् अप्रसिद्धम्। अतः साध्याप्रसिद्धिदोषः।

साध्याप्रसिद्धिदोषवारणाय लक्षणम् ईषत् परिष्क्रियते। **स्वाश्रयत्वेन अभिमत-निष्ठात्यन्ताभाव-प्रतियोगित्वं मिथ्यात्वम्** इति लक्षणं क्रियते। अत्र यस्य मिथ्यात्वं स स्वपदेन बोध्यः। स्वस्य आश्रयरूपेण अभिमतपदार्थे वर्तमानो यः अत्यन्ताभावः, तत्प्रतियोगित्वम् मिथ्यात्वम् इत्यर्थः। तथाहि - शुक्तिरजतस्थले पुरोवर्तिनि पदार्थे इदं रजतम् इति प्रतीतिः भवति। अत्र इदं विशेष्यं रजतं च प्रकारः। रजतस्य आश्रयः वस्तुतः इदं नास्ति। परन्तु रजतस्य आश्रयरूपेण इदं प्रतीयते। अर्थात्



रजतप्रकारकप्रतीतेः विशेष्यम् इदम्। अस्मिन् रजतस्य अत्यन्ताभावः विद्यते। एवञ्च अत्यन्ताभावस्य नात्र रजतम् इत्याकारप्रतीतिः भवति। अस्य अत्यन्ताभावस्य प्रतियोगि रजतम्। प्रतियोगित्वं रजते इति रजते मिथ्यात्वम्। स्वस्य (रजतस्य) आश्रयत्वेन अभिमतम् (इदम्, पुरोवर्ती पदार्थः) अभिमते (अस्मिन्) स्वस्य (रजतस्य) अत्यन्ताभावः अस्ति। अतः स्वस्मिन् स्वाश्रयत्वेन अभिमतनिष्ठात्यन्ताभावस्य प्रतियोगित्वम् इति लक्षणगमनात् सिध्यति रजतस्य मिथ्यात्वम्। एवञ्च ईदृशं साध्यं प्रसिद्धम्। अतः प्रोक्तः साध्यासिद्धिदोषो वारितः।

**स्वाश्रयत्वेन अभिमत-निष्ठात्यन्ताभाव-प्रतियोगित्वं मिथ्यात्वम्** इति लक्षणे कृतेऽपि सिद्धसाधनत्वदोषो जायते। तथाहि - वृक्षे शाखायाम् एकत्र कपिः उपविष्टः। अतः कपिसंयोगः वृक्षे शाखावच्छेदेन अस्ति। संयोगः आधेयः, वृक्षः आधारः। अतः आधेयतासम्बन्धेन वृक्षः संयोगवान् इति प्रतीतिः जायते। आधेयतासम्बन्धेन मूलावच्छेदेन कपिसंयोगः नास्ति। अतः संयोगाभाववान् वृक्षः इति प्रतीतिः जायते। संयोगस्य आश्रयत्वेन अभिमते वृक्षे संयोगाभावः अपि अस्ति। अतः संयोगाश्रयत्वेन अभिमते वृक्षे यः अत्यन्ताभावः, तस्य प्रतियोगित्वं संयोगे इति तु ज्ञातमेव। तस्य ज्ञानार्थं मिथ्यात्वानुमानस्यावश्यकता नास्ति। अतः एवं स्थलेषु मिथ्यात्वं सिद्धमेव। अतः मिथ्यात्वानुमाने सिद्धसाधनत्वदोषो जायते।

मिथ्यात्वानुमानेन मिथ्यात्वं साधनीयम्। परन्तु यदि स्वाश्रयत्वेन अभिमत-निष्ठात्यन्ताभाव-प्रतियोगित्वम् इति मिथ्यात्वलक्षणं तर्हि इदं लक्षणं मिथ्यात्वं न साधयति। मिथ्यात्वं तु सत्यत्वस्य विरुद्धम्। परन्तु इदं लक्षणं सत्यत्वविरुद्धं मिथ्यात्वम् असाधयित्वा अर्थान्तरं कल्पयति। किं तद् अर्थान्तरम्। अनेन लक्षणेन कस्य मिथ्यात्वम् आगतम्। कपिसंयोगस्य। कपिसंयोगः स्वात्यन्ताभावप्रतियोगी इति अर्थान्तरं कल्पयति। पदार्थः यस्मिन्नधिकरणे वर्तते तस्मिन्नधिकरणे यदि तस्य अत्यन्ताभावः अपि स्यात् तर्हि स पदार्थः अव्याप्यवृत्तिः कथ्यते। कपिसंयोगे स्वात्यन्ताभावप्रतियोगित्वम् इति अव्याप्यवृत्तित्वस्य साधनं करोति इदं लक्षणम्। ईदृशमेव यदि मिथ्यात्वं तर्हि तत् सत्यत्वविरुद्धमपि नास्ति एवञ्च अव्याप्यवृत्तित्वरूपम् अर्थान्तरमपि कल्पयति। अयमपि दोषः। अतः दोषद्वयवारणाय लक्षणे इतोऽपि परिष्कारः विधीयते। **स्वाश्रयत्वेन अभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वं मिथ्यात्वम्** इति लक्षणं क्रियते। यावत्-पदस्यार्थः साकल्यम् इति। समस्तावयवाः इत्यर्थः। तथाच स्वाश्रयत्वेन अभिमते यावति समस्तावयवात्मके स्थितो यः अत्यन्ताभावः, तत्प्रतियोगित्वं यदि स्वस्य स्यात् तर्हि स्वस्य मिथ्यात्वम् स्यादित्यर्थः। यथा रजताश्रयत्वेन अभिमते यावति अर्थात् समग्रे (सर्वावयवेषु) शुक्त्यात्मके वस्तुनि वर्तमानः यः अत्यन्ताभावः तत्प्रतियोगित्वं रजतस्य अस्ति। अतः रजतस्य मिथ्यात्वसिद्धिः।

एवं - **स्वाश्रयत्वेन अभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वम् इति मिथ्यात्वस्य** इति लक्षणमिति सिद्धम्।

स्वं - मिथ्यात्वेन अभिमतः पदार्थः। तस्य आश्रयत्वेन अभिमतं यत् यावद् च वस्तु, तन्निष्ठः यः अत्यन्ताभावः, तत्प्रतियोगित्वं मिथ्यात्वम् इत्यर्थः। तथा च स्वम् घटादिकम्। तदाश्रयत्वेन अभिमतं कपालादिकम्। तन्निष्ठः अत्यन्ताभावः - घटाद्यत्यन्ताभावः। तत्प्रतियोगित्वं घटादेः अस्ति। अतः घटादेः



मिथ्यात्वं सिध्यति। व्यावहारिकः घटादिः कपालादौ वर्तते एव। न तु तस्य अत्यन्ताभावः कलापादौ। तथापि पारमार्थिकत्वेन घटादिः कदापि कपालादौ न वर्तते। अतः पारमार्थिकत्वेन कपाले घटादेः अत्यन्ताभावः अस्ति एव।



## पाठगतप्रश्नाः -५

१९. कया श्रुत्या जगन्मिथ्यात्वं ज्ञायते।

२०. जगन्मिथ्यात्वानुमानं किम्।

२१. मिथ्यात्वस्य परिष्कृतं लक्षणं लिखत।

## ८.५) उपमानम्

उपमानज्ञानाय सादृश्यज्ञानम् अपेक्षितमिति लौकिकदृष्टान्तेन किञ्चिल्लिख्यते।

### ८.५.१) सादृश्यम्

लोके नैके पदार्थाः भवन्ति येषु परस्परसाधारणधर्माः भवन्ति। यथा वटवृक्षः आम्रवृक्षश्च। वटवृक्षस्य बीजं भवति, बीजरोपणेन वटवृक्षः अङ्कुरितो भवति, क्रमशः एधते। ततः शाखाः जायन्ते। पत्राणि जायन्ते। प्रशाखाः जायन्ते। छाया भवति। वृक्षः ऊर्ध्वम् वर्धते। एवमेव आम्रवृक्षस्यापि विषये भवति। अतः वटस्य नैके धर्माः आम्रवृक्षे सन्ति। एते धर्माः यथा वटे सन्ति तथा आम्रेऽपि सन्ति। अतः वटसदृशः आम्रवृक्षः इति व्यवहारः लोके कर्तुं शक्यः। व्युत्क्रमेण आम्रस्य एतादृशाः नैके धर्माः वटे सन्ति इति कश्चित् वक्तुमिच्छति चेत् आम्रवृक्षसदृशः वटः इत्यपि वाक्यप्रयोगः भवितुम् अर्हति। वटस्य केचिद् असाधारणधर्माः सन्ति ये आम्रवृक्षे नैव सन्ति। अत्र वटवृक्षनिष्ठाः ये असाधारणधर्माः तेभ्यः भिन्नाः वटवृक्षगतधर्माः एव सादृश्यम्। तथाहि सादृश्यलक्षणम् असाधारणान्यतद्गतबहुधर्मवत्त्वम् इति। असाधारणेभ्यः अन्ये तद्गताः बहवः धर्माः असाधारणान्यतद्गतबहुधर्माः। एते यस्मिन् स असाधारणान्यतद्गतबहुधर्मवान्। तस्य भावः असाधारणान्यतद्गतबहुधर्मवत्त्वम्।

अपरमपि लक्षणमस्ति - तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा आम्रवृक्षः वटाद् भिन्नः। अतः तस्मिन् वटभिन्नत्वम् अस्ति। वटस्य ये भूयांसः (अधिकाः) धर्माः ते आम्रवृक्षेऽपि सन्ति इति वटगतभूयोधर्मवत्त्वम् आम्रवृक्षे इति लक्षणसमन्वयः। एवमेव गोभिन्नः महिषः। चत्वारः पादाः, लाङ्गूलम्, शृङ्गद्वयम् इत्यादयः भूयांसः गोधर्माः महिषे सन्ति। अतः महिषे गोभिन्नत्वम् अस्ति, गोगतभूयोधर्माः अपि सन्ति इति महिषे गोसादृश्यम् अस्ति। सादृश्यं सम्बन्धविशेषः। अतः तस्य एकः प्रतियोगी भवति अपरः अनुयोगी भवति।



यदा गोगतधर्माः महिषे इति, अर्थात् गोसादृश्यम् महिषे इति विवक्षा तदा गौः गोनिरूपितसादृश्यस्य प्रतियोगी, महिषः सादृश्यस्य अनुयोगी इति कथ्यते। यदा तु महिषगतधर्माः गवि अर्थात् महिषसादृश्यं गवि इति विवक्षा तदा महिषनिरूपितसादृश्यस्य महिषः प्रतियोगी, गौः अनुयोगी इति कथ्यते। गोनिरूपितसादृश्यं महिषनिरूपितसादृश्याद् भिन्नमेव भवति। अन्यथा गोसदृशस्य महिषस्य दर्शने महिषसदृशं पश्यामि इति प्रयोगापत्तिः। गोदर्शने च गोसदृशं पश्यामि इति प्रयोगापत्तिः।

## ८.५.२) उपमानम्

चैत्रः नाम कश्चित् जनः गां जानाति। परन्तु गवयः कः इति न जानाति। गवयः वन्यः कश्चित् पशुविशेषः। चैत्रः वनं गच्छन् आरण्यकपुरुषं गवयज्ञानवन्तं पृच्छति, कः गवयः इति। तं प्रति स पुरुषः वदति - यथा गौः तथा गवयः इति। अस्माद् वाक्याद् 'गोसदृशः गवयः' इति परोक्षवाक्यार्थज्ञानं जायते। ततश्च वनं गतः चैत्रः एकं पशुपिण्डं पश्यति। वस्तुतः स पशुः गोसदृशः। अतः गोसदृशो गवयः इति वाक्यार्थं चैत्रः स्मरति। चैत्रस्य स्मृतौ अपि गोसादृश्यम् अस्ति, सम्मुखस्थिते पशौ अपि गोसादृश्यं प्रत्यक्षीकरोति। इत्थं स्मरणात्मकज्ञानसहकृतेन गोसादृश्यविषयकप्रत्यक्षज्ञानेन इदं ज्ञानं जायते यत् एतत्पशुजातीयाः सर्वे पशवः गवयपदवाच्याः इति।

गवये गोसादृश्यदर्शनेन गोदेहे गवयसादृश्यस्य ज्ञानं भवति। गवयः सन्निहितः वर्तते परन्तु गौः असन्निहितः वर्तते। गवा सह न कस्यापि इन्द्रियस्य कोऽपि सन्निकर्षः वर्तते। तथापि अस्मिन् असन्निहिते गवि जायमानम् इदं गवयसादृश्यज्ञानमेव उपमितिः। गवये गोसादृश्ये ज्ञाते एव गवि गवयसादृश्यं ज्ञायते इति अन्वयसहचारः। गवये गोसादृश्ये अज्ञाते गवि गवयसादृश्यं न ज्ञायते इति व्यतिरेकसहचारः। अतः गवि गवयसादृश्यज्ञानं प्रति गवयनिष्ठगोसादृश्यज्ञानं करणम्। तदेव उपमानम् इति कथ्यते।

चैत्रः अरण्ये पशुदेहे गोसादृश्यं पश्यति। गोसदृशः गवयः इति न जानीयात् तर्हि तस्मिन् पशुदेहे स गोसादृश्यं न पश्येत्। अतः गोसदृशः गवयः इति ज्ञानम् अपेक्षितमेव। अत्र उपमेयः गवयः। चैत्रस्य उपमेयाकारा अन्तःकरणवृत्तिः जायते। इयं वृत्तिरेव उपमानम्। गवयनिष्ठं गोसादृश्यज्ञानं विना इयं वृत्तिः नैव जायते। एतद्वृत्तेः जनकम् गवयनिष्ठं गोसादृश्यज्ञानम्। अतः इदं सादृश्यज्ञानं गौणम् उपमानम्। मुख्यम् उपमानं तु उपमेयाकारा वृत्तिरेव। यतो हि उपमेयाकारवृत्तिं विना उपमितिः नैव भवितुम् अर्हति।

प्रकारान्तरेण स एव विषयः प्रतिपाद्यते बोधसौकर्याय -

चैत्रः गोसदृशः गवयः इति जानाति। वनं गच्छति। पशुपिण्डं पश्यति। स पशुपिण्डः गोदृशः अस्ति। अतः गोसदृशः गवयः इति स्मरति। एवञ्च सम्मुखे गवये गोसादृश्यं पश्यति। अत्र सादृश्यम् उपमेयम्। उपमेयाकारा वृत्तिः जायते। इयं वृत्तिः उपमानप्रमाणम्। ततः परं चैत्रः चिन्तयति - मदीयो गौः गवयसदृशः इति। अधुना गोनिष्ठ-गवयसादृश्यं ज्ञानं तस्य जायते। इदं ज्ञानमेव उपमितिः। यदि उपमेयाकारा वृत्तिः न जायेत तर्हि गोनिष्ठ-गवयसादृश्यज्ञानं न उत्पद्येत। अतः सा वृत्तिः उपमानप्रमाणम्।

सन्निहिते गवये गोसादृश्यज्ञानम् उपमानप्रमाणम्। असन्निहिते गवि गवयसादृश्यज्ञानम् उपमितिः।



गोनिष्ठं गवयसादृश्यं प्रत्यक्षेण प्रमाणेन ज्ञातुं न शक्यते यतो हि इन्द्रियस्य गवा सह न कोऽपि सन्निकर्षः भवति। गौः धर्मी। गवयसादृश्यं धर्मः। धर्मिणः इन्द्रियेण सह सन्निकर्षाभावे धर्मेण सह इन्द्रियसन्निकर्षः न सम्भवति। एवं गोगत-सादृश्येन इन्द्रियार्थसन्निकर्षाभावात् गोनिष्ठसादृश्यविषयकं प्रत्यक्षज्ञानं न उत्पद्यते। गवये गोसादृश्यं हि गवि गवयसादृश्यम् इति वक्तुं न शक्यते। गोसदृशस्य गवयस्य दर्शने गवयसदृशं पश्यामि इति प्रयोगापत्तिः। गोदर्शने च गोसदृशं पश्यामि इति प्रयोगापत्तिः।



## पाठगतप्रश्नाः -६

२२. सादृश्यलक्षणं किम्।

२३. कः सादृश्यस्य प्रतियोगी भवति।

२४. गोनिरूपितसादृश्यं गवयनिरूपितसादृश्यम् एकम् भिन्नं वा।

२५. किम् उपमानप्रमाणम्।

२६. का उपमितिः।



## पाठसारः

अस्मिन् पाठे अमुमानम् उपमानम् इति प्रमाणद्वयम् आलोचितम्। तत्र अनुमितिकरणम् अनुमानं स्वार्थपरार्थभेदेन द्विविधम्। नैयायिकानां मतेन सह वेदान्तिनां विरोधः अस्ति। अतः दर्शनद्वयस्यापि अनुमानप्रक्रिया अत्र प्रदर्शिताः। तत्रादौ पाठे प्रथमम् न्यायसम्मतः स्वार्थानुमानक्रमः प्रदर्शितः। ततः परं वेदान्तसम्मतः अनुमानक्रमः प्रतिपादितः।

अनुमितिकरणम् अनुमानं तदैव ज्ञातुं शक्यं यदि अनुमितिज्ञानं स्यात्। अतः आदौ कानुमितिः इति आलोचितम्। ततश्च परार्थानुमानं प्रदर्शितम्। अनुमानस्य हृदयं व्याप्तिः। अतः व्याप्तिः प्रपञ्चिता। ततश्च सद्धेतून् उक्त्वा जगन्मिथ्यात्वम् उक्तम्। जगन्मिथ्यात्वस्य अनुमानं प्रदर्शितम्। तत्र मिथ्यात्वस्य लक्षणं विना जगन्मिथ्यात्वम् बोद्धुं न शक्यते इति हेतोः मिथ्यात्वलक्षणमपि परिष्कृतम्।

अनुमानात् परम् उपमानप्रमाणम् प्रतिपादितम्। सादृश्यज्ञानं विना उपमानप्रमाणम् सुष्ठु ज्ञातुं न शक्यमिति आदौ सादृश्यं प्रपञ्चितम् अस्ति।



## पाठान्तप्रश्नाः

१. न्यामसम्मतः अनुमानक्रमः प्रतिपादनीयः।

२. वेदान्तिसम्मतः अनुमानक्रमः प्रतिपादनीयः।



३. व्याप्तिज्ञानस्य अनुमितिं प्रति करणत्वम् उपपादयत।

४. वेदान्तन्याययोः अनुमानक्रमे भेदं लिखत।

५. व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या हि अनुमितिः इति सविस्तरम् प्रतिपादयत।

६. अनुमितिलक्षणस्य दलकृत्यम् प्रस्तूयताम्।

७. अमुमितिम् आलोचयत।

८. परार्थानुमानं विशदयत।

९. अनुमितौ कस्यांशस्य अनुमितित्वम् इति सोदाहरणं प्रतिपादयत।

१०. व्याप्तिलक्षणं परिष्कुरुत।

११. मिथ्यात्वस्य परिष्कृतं लक्षणं सदलकृत्यं लिखत। मिथ्यात्वस्य परिष्कृतं लक्षणं सदलकृत्यं लिखत।

१२. मिथ्यात्वस्य परिष्कृतलक्षणस्य समन्वयं लिखत।

१३. सादृश्यं विवृणुत।

१४. उपमानं निरूपयत।

१५. उपमितिं निरूपयत।

१६. उपमानं कथं प्रत्यक्षेण न गतार्थम्।



## पाठगतप्रश्नानाम् उत्तराणि

१. अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्या।

२. स्वार्थानुमानपरार्थानुमानभेदेन अनुमानं द्विविधम्।

३. पर्वतो वह्निमान्।

४. यत्र यत्र धूमः तत्र तत्र वह्निः इति सहचारदर्शने धूमः वह्निव्याप्यः इति व्याप्तिविषयकं प्रत्यक्षः अनुभवः जायते। अयं व्याप्तेः अनुभवः, अयमेव व्याप्तिज्ञानमिति नाम्ना प्रसिद्धः। अयं प्रथमलिङ्गपरामर्शः कथ्यते।

५. पक्षधर्मताज्ञानम्।

६. उद्बुद्धः व्याप्तिसंस्कारः।

७. प्रतियोगित्वेन रूपेण।

८. व्याप्तिज्ञानत्वेन।

९. अनुभवत्वेन।

१०. अनुमितौ।

११. व्याप्तिज्ञानत्वावच्छिन-जनकतानिरूपित-जन्यतावज्ज्ञानत्वं हि अनुमितेः लक्षणम्।



१२. परस्य अर्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपः।

१३. त्रयः।

१४. वह्निप्रकारकांशे।

१५. घटपटौ समानाधिकरणे स्तः।

१६. अशेषसाधनाश्रयाश्रितसाध्यसाध्यसामानाधिकरण्यं व्याप्तिलक्षणम्।

१७. यस्मिन् हेतौ व्याप्तिः अस्ति एवञ्च यो हेतुः पक्षे वर्तते स हेतुः सद्धेतुः।

१८. अन्वयि इति एकविधमेव।

१९. नेह नानास्ति किञ्चन। अतोऽन्यदार्तम्।

२०. ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात्।

२१. स्वाश्रयत्वेन अभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वम् मिथ्यात्वस्य लक्षणम्।

२२. सादृश्यलक्षणम् असाधारणान्यतद्गतबहुधर्मवत्त्वम् इति। अपरमपि लक्षणमस्ति - तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्।

२३. यद्गतभूयांसो धर्माः अन्यस्मिन् सन्ति इति विवक्षा यस्य धर्माः सः प्रतियोगी भवति। यथा गोगताः भूयांसो धर्माः गवये सन्ति इति विवक्षा तदा गोः धर्माः इति गौः प्रतियोगी।

२४. भिन्नम्।

२५. यस्मिन् सादृश्यम् उपमितौ भासते तन्निरूपितसादृश्याकारा प्रमाणवृत्तिः उपमानम्।

२६. असन्निहिते सन्निहितनिरूपितसादृश्यज्ञानम् उपमितिः।

॥ इति अष्टमः पाठः ॥



९

# आगमखण्डः

## प्रस्तावना

वेदान्तशास्त्रे षट् प्रमाणानि सन्ति। तानि च प्रत्यक्षम् अनुमानम् उपमानम् शब्दः अर्थापत्तिः अनुपलब्धिश्चेति। प्रमा च पञ्चविधा प्रत्यक्षप्रमा अनुमितिप्रमा उपमितिप्रमा शाब्दबोधप्रमा अर्थापत्तिप्रमा चेति। तत्र प्रत्यक्षप्रमाणं प्रत्यक्षप्रमा च, अनुमानप्रमाणम् अनुमितिप्रमा च, उपमानप्रमाणम् उपमितिप्रमा च इति चत्वारि प्रमाणानि चतस्रः प्रमाश्च पूर्वपाठेषु विस्तरेण प्रतिपादिताः। अस्मिन् पाठे शब्दप्रमाणम् शाब्दबोधप्रमा च प्रस्तूयेते। शब्दप्रमाणस्यैव अपरं नाम भवति आगमप्रमाणम् इति। आ सम्यक् गम्यते ज्ञायते अर्थः अनेन इति आगमो वाक्यविशेषः इति आगमपदव्युत्पत्तिः। अतः व्याख्यानकाले कुत्रचित् शब्दप्रमाणम् इति शब्दस्य प्रयोगः, कुत्रचित् च आगमप्रमाणम् इति शब्दस्य प्रयोगः क्रियते। तस्मात् तत्र सन्देहः न कार्यः। तत्र शब्दप्रमाणस्य मुख्यप्रतिपाद्यविषयाः भवन्ति शब्दप्रमाणलक्षण्, शक्तिस्वरूपम्, लक्षणास्वरूपम्, शब्दजन्यबोधे सहकारिकारणानि च। तान्येव प्रस्तूयन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- अद्वैतवेदान्तमते शब्दप्रमाणं ज्ञास्यति।
- शाब्दप्रमा का इति ज्ञास्यति।
- वृत्तिं ज्ञात्वा शक्तिः लक्षणा इति तद्भेदान् ज्ञास्यति।
- लक्षणाबीजं ज्ञास्यति।
- शाब्दबोधे सहकारिकारणानि कानीति अवगच्छेत्।
- वेदान्तमतेन वेदस्य पौरुषयत्वापौरुषेयत्वविचारं ज्ञास्यति।

## ९.१) शब्दप्रमाणलक्षणम्

शब्दप्रमाणम् इति शब्दस्य अर्थः शब्दः प्रमायाः करणम् इति। तत्र कस्याः प्रमायाः करणं शब्दः इति चेत् वेदान्तनये प्रमा पञ्चविधा वर्तते। तथाहि प्रत्यक्षप्रमा अनुमितिप्रमा उपमितिप्रमा शाब्दबोधप्रमा अर्थापत्तिप्रमा चेति। तत्र शाब्दबोधरूपायाः प्रमायाः यत् करणं तदेव शब्दप्रमाणम् इति अर्थः शब्दप्रमाणशब्दस्य प्रतिफलति। एवञ्च शब्दप्रमाणस्य सामान्यलक्षणं वक्तुं शक्यते शाब्दबोधकरणत्वं



शब्दप्रमाणत्वम् इति। तत्र एतस्य लक्षणस्य समन्वयात् पूर्वं शाब्दबोधः कः इति चेत् तत्र शब्दात् जन्यः बोध एव शाब्दबोधः इति उच्यते। शाब्दबोधः एव च शाब्दप्रमा, शाब्दबोधः, शाब्दी प्रमा, बोधः इति च उच्यते। एवञ्च शाब्दबोधरूपायाः प्रमायाः करणमेव शब्दप्रमाणमिति उक्तं भवति। तत्र किं शब्दमात्रं शाब्दप्रमायाः करणं भवति अथवा कश्चित् विशिष्टः एव शब्दः इति जिज्ञासायां प्रमाणभूतशब्दस्य लक्षणं भवति **यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद् वाक्यं प्रमाणम्** इति।

अत्र वाक्यस्य अन्वयः तात्पर्ये। तात्पर्यं च तत्प्रतीतिजननयोग्यत्वम् इति अग्रे सविस्तरं वक्ष्यते। तात्पर्यं च वाक्यनिष्ठम्। मानान्तरं च वेदान्तेतरं प्रमाणम्। तात्पर्यविषयीभूतः इति संसर्गविशेषणम्। संसर्गपदस्य पदार्थान्वयः इति अर्थो भवति। संसर्गपदस्य चात्र वाक्यार्थः इति अर्थः। वाक्ये यथा पदजन्यपदार्थः भासते तथा पदोपस्थापितेषु अर्थेषु परस्परं संसर्गोऽपि भासते, स आकाङ्क्षया भासते। एवं संसर्गोऽपि वाक्यार्थे अन्तर्भवति एव। अतः प्रोक्तलक्षणे संसर्गपदं वाक्यार्थपरम्। न बाध्यते इत्यस्यार्थो हि बाधकप्रमाया विषयो न भवतीति।

इत्थं वेदान्तेतरप्रमाणेन अबाधितः किञ्च वाक्यनिष्ठं यत् तात्पर्यं तद्विषयीभूतः वाक्यार्थः (संसर्गः) यस्य वाक्यस्य तद् वाक्यम् आगमप्रमाणमित्यर्थो भवति। अर्थात् तथा अर्थविषयं बोधं यद् वाक्यं जनयति तद् वाक्यम् आगमप्रमाणम्।

तेन च वेदान्तेतरप्रमाणाधित-तात्पर्यविषयीभूतवाक्यार्थविषयकप्रतीतिजननयोग्यत्वम् आगमप्रमाणस्य लक्षणं फलति।

नीलः घटः इत्यादौ समन्वयः प्रस्तूयते। तथाहि नीलः घटः इति वाक्यस्य अर्थः भवति नीलाभिन्नघटः इति। तस्मात् तात्पर्यविषयभूतो वाक्यार्थः नीलाभिन्नघटः इति। अयं च अर्थः केनापि वेदान्तेतरप्रमाणेन बाधितः नास्ति। अतः अयम् अर्थः मानान्तराबाधितः अपि अस्ति। एवञ्च मानान्तराबाधितः तात्पर्यविषयीभूतवाक्यार्थः अपि अस्ति। तद्विषयकप्रतीतेः जननयोग्यं हि नीलः घटः इति वाक्यम् अस्ति। तस्मात् इदं वाक्यं प्रमाणम्।

### वाक्यलक्षणस्य पदकृत्यम्

अत्र विचार्यते यदि वाक्यत्वं शब्दप्रमाणत्वम् इति लक्षणं क्रियते तर्हि जलेन सिञ्चति इत्यादौ वाक्यत्वस्य सत्त्वात् तत्र लक्षणं गच्छति। तच्च इष्टमपि। किन्तु दश दाडिमानि षड् अपूपाः इत्यादौ निरर्थकेषु पदसमुदायेषु अपि वाक्यत्वस्य सत्त्वेन तत्रापि लक्षणं गच्छति। किन्तु तेषां तु प्रमाणत्वम् न इष्टम्। अतो लक्षणस्य तत्र गमनाद् लक्षणे अतिव्याप्तिः। तद्वारणाय तात्पर्यविषयीभूतवाक्यार्थविषयकबोधजनकत्वं वाक्ये विशेषणं प्रदत्तम्। ततश्च तात्पर्यविषयभूतवाक्यार्थविषयकबोधजनकत्वं शब्दप्रमाणत्वम् इति लक्षणं भवति। तेन च न निरर्थकवाक्येषु अतिव्याप्तिः। तादृशवाक्यैः कस्यापि बोधस्य अजननात् तात्पर्यविषयीभूतार्थविषयकबोधजनकत्वस्य तत्रासम्भवात्। परन्तु तात्पर्यविषयीभूतवाक्यार्थविषयकबोधजनकत्वं शब्दप्रमाणत्वमिति उच्यते चेत्



भ्रमात्मकतात्पर्यविषयीभूतबोधजनके शाक्यादिवाक्ये अतिव्याप्तिः, अतस्तत्र दोषवारणाय मानान्तराबाधिततात्पर्यविषयीभूतबोधजनकवाक्यत्वं शब्दप्रमाणत्वमिति लक्षणं कृतम्।

ननु घटमानय, स्वर्गकामो यजेत इत्यादीनां लोकिकानां वैदिकानां च वाक्यानाम् अप्रामाण्यापत्तिः। कुत इति चेदुच्यते- नेह नानास्ति किञ्चन इति अतोऽन्यदार्तमित्यादिश्रुतयः। तदर्थो हि ब्रह्मभिन्नं सर्वं मिथ्या अर्थात् बाधितमिति। अतः तत्तद्वाक्यतात्पर्यविषयीभूतानां तत्तत्संसर्गाणाम् बाधितत्वमिति। अत्रोच्यते यदत्र मानान्तरपदेन वेदान्तेतरप्रमाणस्य ग्रहणात् न कश्चिद् दोषः। यद्यपि एतेषां वाक्यानां संसर्गः बाधितः तथापि स वेदान्तप्रमाणेन बाधितः न तु ततो भिन्नेन केनापि प्रमाणेन।

## १.२) वृत्तिः

शब्दजन्यबोधं प्रति न शब्दज्ञानमात्रं कारणम्, किन्तु शब्दनिष्ठवृत्तिज्ञानमपि शब्दजन्यं बोधं प्रति कारणमिति सर्वतन्त्रसिद्धम्। यतो हि न हि शब्दश्रवणमात्रेण बोधः भवति। किन्तु तादृशेनैव शब्देन बोधः जायते यस्य वृत्तिं जानाति श्रोता। अतः शाब्दबोधे कारणीभूता वृत्तिपदार्थः कः इति जिज्ञासा। तत्रोच्यते - पदस्य अर्थेन सह यः बोधानुकूलः सम्बन्धः भवति सा एव वृत्तिः इत्युच्यते बुधैः। अत एव शाब्दबोधानुकूलः पदपदार्थसम्बन्धः इति वृत्तिलक्षणम् प्रतिपादितं शास्त्रेषु। यथा गङ्गापदस्य जलप्रवाहरूपार्थेन सह कश्चित् सम्बन्धः अस्ति येन गङ्गापदं श्रुतं चेत् जलप्रवाहविषयकबोधं जनयति यः वृत्तिं जानाति तस्य। सः सम्बन्धः एव वृत्तिः। एवमेव सर्वेषां पदानां स्वार्थेन सह अर्थविषयकबोधानुकूलः कश्चित् सम्बन्धः भवति। सः एव सम्बन्धः वृत्तिः इत्यभिधीयते। सा च वृत्तिः वेदान्तमते द्विधा वर्तते। शक्तिः लक्षणा चेति। अत्र क्रमेण उभयोः सभेदं स्वरूपं प्रतिपाद्यते।

एकस्यैव शब्दस्य वृत्तेः द्वैविध्यात् शब्दस्य अर्थोऽपि द्विविधः। स च शक्यः लक्ष्यः इति।

### १.२.१) शक्तिः

शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः। पदानाम् अर्थेषु या मुख्या वृत्तिः भवति सा एव शक्तिः इत्युच्यते। यथा घटपदस्य पृथुबुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः। शक्तिश्च तत्तत्पदजन्य-पदार्थज्ञानरूप-कार्यानुमेया।

नदी इति आनुपूर्वीज्ञाने यदर्थबोधः जायते दीन इति पदश्रवणे भिन्नार्थबोधः जायते। यद्यपि वर्णाः त एव सन्ति तथापि तेषु क्रमे भेदः अस्ति। एवञ्च नदी इति पदेन जलप्रवाहरूपस्य अर्थस्य उपस्थितये या वृत्तिः सहकारिणी ततो भिन्ना एव वृत्तिः दीन इति पदस्य अर्थस्य उपस्थितये सहकारिणी। इत्थं सिद्धं यद् प्रतिपदं वृत्तिः भिद्यते। एवञ्च वृत्तिभेदेन नियामकं निरूपकं वा आनुपूर्वी एव। वृत्तिः यम् अर्थं स्मारयति उपस्थापयति सः अर्थः वृत्तिविषयो भवति। अतः वृत्तिः निरूपकत्वसम्बन्धेन पदे तिष्ठति। विषयतासम्बन्धेन च अर्थे तिष्ठति। वृत्तिः निरूपकत्वसम्बन्धेन यत्र तिष्ठति तत् शक्तम् कथ्यते। वृत्तिः विषयतासम्बन्धेन यत्र तिष्ठति स शक्यः कथ्यते। अत एव पदं शक्तम् अर्थश्च शक्यः भवति। शक्तम् इत्यस्य शक्तिमत् इत्यर्थः। शक्तिश्च सामर्थ्यं, तच्च ज्ञानजनने। तथा च (स्वशक्यार्थविषयक)ज्ञानजननसमर्थं पदमिति लभ्यते। अर्थस्मृत्यनुकूलपदतदर्थसम्बन्धः शक्तिः।



**अयं भावः -**

कश्चित् शब्दः स्वनिष्ठवृत्त्यैव कमपि अर्थम् उपस्थापयति। वृत्तिश्च वेदान्तनये द्विविधा अस्ति। एका शक्तिः अपरा लक्षणा। तत्र शक्तिः का इति चेत् या मुख्या वृत्तिः सा एव शक्तिः इत्यभिधीयते। अत्र मुख्यत्वं नाम किमिति चेत् या वृत्त्यन्तरोपस्थितिनिरपेक्षा सा एव मुख्या। यथा गङ्गायां घोषः इत्यादौ गङ्गाशब्दस्य एकया वृत्त्या जलप्रवाहः इत्यर्थः भवति। अपरया च वृत्त्या तटः इत्यर्थः भवति। तत्र यया वृत्त्या जलप्रवाहस्य उपस्थितिः भवति सा एव शक्तिः अस्ति। कारणं हि जलप्रवाहरूपस्य अर्थस्य उपस्थापिका या वृत्तिः अस्ति सा अन्यां वृत्तिं विनैव जलप्रवाहरूपम् अर्थम् उपस्थापयति। अतः जलप्रवाहरूपस्य अर्थस्य उपस्थापिका या वृत्तिः सा एव शक्तिः इत्यभिधीयते। तटरूपस्य अर्थस्य उपस्थापिका या वृत्तिः सा तु न शक्तिः। कारणं हि या वृत्तिः तटरूपम् अर्थम् उपस्थापयति सा जलप्रवाहरूपस्य अर्थस्य ज्ञानान्तरमेव तटाद्यर्थम् उपस्थापयति। अतः सा वृत्त्यन्तरोपस्थितिनिरपेक्षा नास्ति। तस्मात् सा न शक्तिः इति भावः। अथवा प्रत्येकं शब्दानां द्विविधः अर्थः भवति - मुख्यः अमुख्यः च। तत्र मुख्यः कः, कश्च अमुख्यः इति चेत् सकलजनवेद्यः यः अर्थः सः मुख्यः। पण्डितजनमात्रवेद्यः यः अर्थः सः अमुख्यः। यथा गङ्गाशब्दस्य जलप्रवाहः इत्येकः अर्थः, तटः इत्यपरः अर्थः। तत्र जलप्रवाहरूपार्थः मुख्यः। कारणं स हि सकलजनवेद्यः अस्ति। तटरूपार्थश्च अमुख्यः। कारणं न हि सर्वे जनाः जानन्ति यत् गङ्गापदस्य तटः इत्यर्थः अपि अस्ति, किन्तु केवलं पण्डिताः एव जानन्ति। एवञ्च मुख्यम् अर्थम् या वृत्तिः उपस्थापयति सा मुख्या वृत्तिः, या च मुख्या वृत्तिः सा एव शक्तिः इति अभिधीयते। तस्मात् जलप्रवाहस्य उपस्थापिका या वृत्तिः सा शक्तिः इति आगतम्।

### शक्तिः जातौ व्यक्तौ वेति

तत्र शब्देषु मुख्यार्थनिरूपिता वृत्तिः तिष्ठति। तस्याः एव नाम भवति शक्तिः इति। सा च शक्तिः केन अर्थेन निरूपिता भवति इति जिज्ञासा समुदेति। अर्थात् शक्त्या कः अर्थः उपास्थाप्यते, अथवा कः अर्थः वाच्यः भवति इति। इदमेव शक्तिः कस्मिन् तिष्ठति इति वाक्येनापि प्रकट्यते। तत्र अस्य प्रश्नस्य विषये शास्त्रज्ञेषु मतभेदाः भवन्ति। केचित् वदन्ति यत् जातौ एव तिष्ठति। अन्ये वदन्ति यत् व्यक्तौ तिष्ठति। अपरे वदन्ति यत् जातिविशिष्टव्यक्तौ तिष्ठति इति। तत्र एतेषु पक्षेषु सत्सु कः पक्षः वेदान्तसम्मतः इति चेत् जातौ एव शक्तिः तिष्ठति इति। यतो हि व्यक्तौ शक्तिस्वीकारे व्यक्तीनाम् आनन्त्यात् गौरवं भवति। तेन घटपदस्य घटत्वे शक्तिः, पटपदस्य पटत्वे शक्तिः इति बोध्यम्। व्यक्तिभानं तु आक्षेपात् लक्षणया वा भवति।

## १.२.२) लक्षणा

स्वबोध्यसम्बन्धः लक्षणा। इयं द्वितीया वृत्तिः अस्ति। अस्याः अपरं नाम अमुख्या वृत्तिः। इयं जघन्या वृत्तिः इत्यपि कथ्यते। तत्र वेदान्तमते लक्षणालक्षणं विद्यते - स्वबोध्यसम्बन्धः इति। लक्षणसमन्वयकाले यस्य पदस्य लक्षणा इष्टा तत्पदं स्वपदेन ग्राह्यम्। यथा गङ्गायां घोषः इत्यत्र समन्वयः प्रस्तूयते। तथाहि प्रकृते गङ्गापदस्य तटे लक्षणा इष्टा अस्ति। अतः स्वं गङ्गा इति पदम्। तद्बोध्यः अर्थः



जलप्रवाहरूपः अर्थः। तस्य तटेन सह सामीप्यसम्बन्धः अस्ति। अतः प्रकृते स्वबोध्यसम्बन्धः सामीप्यसम्बन्धः। सा एव च लक्षणा वृत्तिः। अनयैव लक्षणावृत्त्या गङ्गाशब्दः तटरूपम् अर्थम् उपस्थापयति। तेन च गङ्गायां घोषः इति वाक्यात् तटवृत्तिघोषः इति बोधः भवति। एवमेव गभीरायां नद्यां घोषः इत्यादौ अपि गभीरपदात् गभीरार्थस्य नदीपदात् नद्यर्थस्य उपस्थितिः भवति। गभीरपदार्थस्य नदीपदार्थेन सह अभेदेनान्वयः भवति। तेन गभीराभिन्ननदी इति बोधः गभीरायां नद्याम् इति उभाभ्यां पदाभ्यां जायते। किन्तु तदर्थस्य घोषेण साकं तात्पर्यानुपपत्तिः विद्यते। तस्मात् अत्र लक्षणावृत्तिः आश्रीयते। ततश्च स्वं गभीरायां नद्याम् इति। तद्बोध्यः अर्थः गभीराभिन्ननदी इत्याकारकः अर्थः, तस्य तटेन साकं सामीप्यसम्बन्धः विद्यते। अतः स्वबोध्यसामीप्यसम्बन्धरूपलक्षणावृत्त्या गभीरायां नद्याम् इति पदद्वयं तटार्थस्य उपस्थापकं भवति। तेन गभीरायां नद्यां घोषः इति वाक्यात् गभीराभिन्ननदीतटवृत्तिघोषः इति बोधो जायते।

### लक्षणाबीजम्

लक्षणावृत्त्या सर्वत्र अर्थबोधो नैव भवति। किन्तु केषुचित् स्थलेषु एव लक्षणया बोधः जायते। तस्मात् लक्षणायां बीजं किमिति प्रश्नः समुदेति। तत्र केचित् अन्वयानुपपत्तिः लक्षणायां बीजमिति वदन्ति। अन्वयानुपत्तिः इत्यत्र अन्वयशब्दस्य अर्थः सम्बन्धः, अनुपपत्तिशब्दस्य अर्थः बाधः, तेन अन्वयानुपपत्तिशब्दस्यार्थः भवति सम्बन्धबाधः इति। तेनेदं फलति यद् लक्षणायां सम्बन्धबाधः बीजमिति। यथा गङ्गायां घोषः इति केनचित् प्रोक्तम्। अत्र वाक्ये गङ्गापदम् अधिकरणबोधकमस्ति। घोषपदं च आधेयबोधकमस्ति। तत्र गङ्गापदस्य शक्यः अर्थः भवति जलप्रवाहः, अधिकरणसप्तम्याः शक्यः अर्थः भवति वृत्तित्वम्। घोषः इत्यस्य गृहसमुदायः अर्थः। तेन अस्य वाक्यस्यार्थः भवति, जलप्रवाहवृत्तिगृहसमुदायः इति। एतेन अर्थेन जलप्रवाहघोषयोर्मध्ये आधाराधेयभावसम्बन्धः इति प्रतिफलति। किन्तु नहि जलप्रवाहघोषयोर्मध्ये आधाराधेयभावसम्बन्धः भवितुमर्हति। तेन च प्रकृते सम्बन्धबाधः वर्तते। सम्बन्धबाधः एव लक्षणायां बीजमिति कृत्वा अन्वयबाधपरिहाराय प्रकृते गङ्गापदे लक्षणा क्रियते। तेन स्वबोध्यसम्बन्धरूपलक्षणावृत्त्या गङ्गापदात् तटस्य उपस्थितिः भवति। तेन च तटवृत्तिगृहसमुदायः इति बोधः गङ्गायां घोषः इति वाक्यात् भवति। एवमन्यत्रापि बोध्यम्। एवञ्च अन्वयानुपपत्तिः लक्षणायां बीजमिति सिद्धम्। ततश्च यत्र अन्वयस्य अनुपपत्तिः भवति तत्र लक्षणा कर्तव्या इति भावः।

केचिच्च तात्पर्यानुपपत्तिः लक्षणायां बीजमिति वदन्ति। तात्पर्यानुपपत्तिः इत्यस्य अर्थः तात्पर्यबाधः इति। तात्पर्यञ्च वक्तुः इच्छाविशेषः। ततश्च वक्तुः इच्छायाः बाधः एव लक्षणायां बीजमिति केचित्। यथा कश्चित् वक्ता तटवृत्तिघोषः इति बोधयितुं गङ्गायां घोषः इति वाक्यं प्रोक्तवान्। अत्र गङ्गापदस्य शक्यः अर्थः भवति जलप्रवाहः, अधिकरणसप्तम्याः शक्यः अर्थः भवति वृत्तित्वम्। घोषः इत्यस्य गृहसमुदायः अर्थः। एवम् अस्य वाक्यस्य श्रोता जलप्रवाहवृत्तिगृहसमुदायः इति बोधम् अनुभवति। तदा वक्तुः तात्पर्यस्य बाधः भवति। कारणं हि वक्ता तटवृत्तिघोषः इति तात्पर्येण गङ्गायां घोषः इति प्रोक्तवान्। तस्मात् शक्यार्थमादाय जलप्रवाहवृत्तिघोषः इत्यर्थकरणेन तात्पर्यस्य बाधः भवति। अतः तात्पर्यबाधरूपलक्षणाबीजस्य विद्यमानत्वात् तात्पर्यबाधपरिहाराय प्रकृते गङ्गापदे लक्षणा क्रियते। तेन



स्वबोध्यसम्बन्धरूपलक्षणावृत्त्या गङ्गापदात् तटस्य उपस्थितिः भवति। तेन च तटवृत्तिगृहसमुदायः इति बोधः गङ्गायां घोषः इति वाक्यात् भवति। एवमन्यत्रापि बोध्यम्। एवञ्च तात्पर्यानुपपत्तिः लक्षणायां बीजमिति सिद्धम्। ततश्च यत्र तात्पर्यस्य अनुपपत्तिः भवति तत्र लक्षणा कर्तव्या इति भावः।

### अत्र सिद्धान्तपक्षः

लक्षणायाम् अन्वयानुपपत्तिः बीजमिति एकं मतम्। तात्पर्यानुपपत्तिः इति अपरं मतम्। एवञ्च उभयोः मतयोः विद्यमानयोः कः युक्तः इति प्रश्नः समुदेति। अतः शास्त्रकृद्भिः प्रश्नस्यास्य निराकरणाय प्रोक्तं यत् लक्षणायां तात्पर्यानुपपत्तिः एव बीजं न तु अन्वयानुपत्तिः इति। तदेव तत्त्वं प्रकृते सकारणं प्रस्तूयते। तथाहि - यदि लक्षणायाम् अन्वयानुपत्तिः बीजमिति स्वीक्रियते तर्हि गङ्गायां घोषः इत्यादौ लक्षणासम्भवे अपि काकेभ्यः दधि रक्ष्यताम् इत्यत्र लक्षणा न स्यात्। कारणं हि गङ्गायां घोषः इत्यादौ यथा अन्वयानुपत्तिः वर्तते, तथा काकेभ्यो दधि रक्ष्यताम् इत्यत्र अन्वयानुपत्तिः नास्ति। यतोहि अस्य वाक्यस्यार्थः स्यात् - काकापादानकम् दधिकर्मकम् प्रेरणाविषयीभूतम् रक्षणम् इति। तस्मात् नास्ति कस्यापि पदार्थस्य केनापि पदार्थेन सह सम्बन्धस्य बाधः। ततश्च चात्र लक्षणा न स्यात्। किन्तु प्रकृते लक्षणा इष्टा अस्ति। कारणं नहि काकमात्रात् दधिरक्षणम् इष्टम्, अपि तु सर्वेभ्यः दधिनाशकेभ्यः प्राणिभ्यः दधिरक्षणम् इष्टम्। एवञ्च अन्वयानुपपत्तिः लक्षणायां बीजमिति स्वीकारे प्रकृते लक्षणा न स्यात्। अतो लक्षणायां न अन्वयानुपपत्तिः बीजं किन्तु तात्पर्यानुपपत्तिरेव बीजमिति भावः। ततश्च काकेभ्यो दधि रक्ष्यताम् इत्यत्र शक्यार्थमादाय बोधस्वीकारे तात्पर्यानुपपत्तिः अस्ति। तस्मात् अत्र काकपदस्य दध्युपघातके लक्षणा क्रियते। तेन प्रकृतवाक्यस्य दध्युपघातकात् दधि रक्ष्यताम् इति बोधः सिध्यति।

## १.२.३) लक्षणाभेदाः

लक्षणाया द्वेधा विभाजनं क्रियते। केवललक्षितभेदेन द्वैविध्यमिति एकः प्रकारः। जहदजहज्जहदजहद्भेदेन त्रैविध्यमिति द्वितीयः प्रकारः।

### केवललक्षणा

शक्यसाक्षात्सम्बन्धः केवललक्षणा। शक्यस्य साक्षात्सम्बन्धरूपा या लक्षणा सा केवललक्षणा इत्युच्यते। यथा गङ्गायां घोषः इत्यत्र गङ्गापदस्य तीरे लक्षणा अस्ति। सा च केवलक्षणा इत्युच्यते। तथाहि स्वं गङ्गापदम्। तस्य शक्यः जलप्रवाहः। तस्य तटेन सह साक्षादेव सामीप्यरूपः सम्बन्धः विद्यते। अतः अत्र या सामीप्यसम्बन्धरूपा लक्षणा सा केवललक्षणा इति भावः। एवमेवान्यत्रापि।

### लक्षितलक्षणा

स्वबोध्यपरम्परासम्बन्धः लक्षितलक्षणा। यथा द्विरेफः रौति इत्यत्र लक्षितलक्षणा विद्यते। अत्र लक्षणस्य समन्वयः प्रस्तूयते। तथाहि यस्य पदस्य लक्षणा कर्तव्या अस्ति तत्पदं स्वपदेन ग्राह्यम्। यथा प्रकृते द्विरेफपदस्य मधुकरे लक्षणा इष्टा अस्ति। तस्मात् स्वपदेन द्विरेफशब्दः ग्राह्यः। स्वम् द्विरेफः इति पदम्। तद्बोध्यः अर्थः रेफद्वयम् इति। तस्य च मधुकरेण सह रेफद्वयघटितपदवाच्यत्वरूपः परम्परासम्बन्धः विद्यते। तथाहि रेफद्वयघटितं पदम् भ्रमर इति पदम्। तद्वाच्यः मधुकरः अस्ति। तस्मात्

प्रकृते रेफद्वयघटितपदवाच्यत्वरूपपरम्परासम्बन्धरूपा लक्षणा विद्यते। अतः लक्षितलक्षणा अस्ति। अत्र केवललक्षणा तु नैव सम्भवति। द्विरेफपदवाच्यस्य रेफद्वयस्य मधुकरेण सह साक्षात्सम्बन्धस्य असम्भवात्।

**जहल्लक्षणा**

शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा। जह्यते त्यज्यते स्वशक्यार्थः यया लक्षणया सा जहल्लक्षणा इति। अर्थात् यत्र लक्ष्यार्थमात्रस्यैव प्रतीतिः भवति, शक्यार्थस्य सर्वथा परित्यागः भवति, तत्र जहल्लक्षणा इति व्यवहारः। ततश्च प्रकृतपदाशक्यमात्रविषयकबोधानुकूला लक्षणा जहल्लक्षणा इति लक्षणं समायाति। यथा विषं भुङ्क्ष्व इति वाक्यात् यद्यपि विषकर्मकभोजनम् इति बोध्यः अर्थः अस्ति। किन्तु अस्य वाक्यस्य शत्रुगृहाधिकरणकभोजनाभावरूपे अर्थे लक्षणा भवति। स च अर्थः प्रकृतपदानाम् अशक्यः अस्ति। तस्मादत्र प्रकृतपदाशक्यमात्रविषयकबोधानुकूला लक्षणा विद्यते। तस्मादत्र जहल्लक्षणा इति व्यवहारः भवति।

**अजहल्लक्षणा**

यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्र अजहल्लक्षणा। न जह्यते त्यज्यते स्वशक्यार्थः यया लक्षणया सा अजहल्लक्षणा इति। इयमेव च अजहत्स्वार्था लक्षणा इति प्रोच्यते। स्वार्थसंवलितपरार्थाभिधायिका अजहत्स्वार्था इति। यथा शुक्लः पटः इत्यत्र शुक्लशब्दस्य शुक्लवति द्रव्ये लक्षणा क्रियते। एवञ्च स्वं शुक्लशब्दः, तच्छक्यं शुक्लरूपात्मकगुणवृत्तिरूपत्वम्, तदन्यः शुक्लगुणाश्रयः पटः, तदुभयबोधानुकूलत्वं शुक्लनिष्ठायां लक्षणायाम् इति भावः। यथा कुन्तान् प्रवेशय इत्यत्र कुन्तशब्दस्य कुन्तास्त्रविशिष्टपुरुषेषु लक्षणा विद्यते। तस्मात् अत्र स्वं कुन्तशब्दः, तस्य शक्यार्थः कुन्तास्त्रविशेषः, तम् अर्थम् अन्तर्भाव्य एव अर्थान्तरस्य पुरुषस्य बोधः भवति। अतः अत्र अजहल्लक्षणा इति व्यवहारः। एवमेव यष्टीः प्रवेशय, छत्रिणः यान्ति, काकेभ्यो दधि रक्ष्यताम् इत्यादौ सर्वत्र बोध्यम्। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधिका लक्षणा अजहल्लक्षणा इति। यथा काकेभ्यो दधि रक्ष्यताम् इत्यत्र काकपदस्य दध्युपघातके लक्षणा। अत्र लक्ष्याः दध्युपघातकाः। लक्ष्यतावच्छेदकत्वं दध्युपघातकत्वम्। शक्यस्य काकस्य काकत्वेन बोधम् अकृत्वा लक्ष्यतावच्छेदकरूपेण दध्युपघातकत्वेन शक्यस्य काकस्य बोधो जायते। अपि च लक्ष्यतावच्छेदकरूपेण शक्यभिन्नानाम् अन्येषामपि दध्युपघातकानां बोधः जायेत। यतो हि काके काकत्वम् इति काकात् दधि न रक्ष्यते अपि तु काके दध्युपघातकत्वम्, अतः काकात् दधि रक्ष्यते।

**जहदजहल्लक्षणा**

यत्र विशिष्टवाचकः शब्दः स्वार्थैकदेशं विहायैकदेशे वर्तते, तत्र जहदजहल्लक्षणा। यथा सोऽयं देवदत्तः इति वाक्यम् अस्ति। अत्र लक्षणायाः पूर्वं वाक्यस्य स्थितिः बोध्या। तथाहि एवम्भूतं वाक्यं कदा प्रयुज्यते - यदा कश्चित् जनः वाराणस्यां देवदत्तनामकं पुरुषं दृष्टवान्। पुनः स एव अयोध्यायां तमेव देवदत्तं पश्यति। तदा सः वदति सः अयं देवदत्तः इति। तत्र तत्पदेन वाराणसीस्थदेवदत्तस्य ग्रहणम्, इदम्पदेन च अयोध्यास्थदेवदत्तस्य ग्रहणम्। ततश्च तत्पदार्थः वाराणसीस्थदेवदत्तः, इदम्पदार्थः



अयोध्यास्थदेवदत्तः इति। तत्र सः इति शब्दः अपि प्रथमान्तः अस्ति। अपि च अयम् इति शब्दः अपि प्रथमान्तः अस्ति। एवञ्च उभयोः पदयोः समानविभक्तिकत्वात् समानविभक्तिकपदोपस्थाप्ययोः अर्थयोः अभेदः भवति इति नियमः। यथा नीलो घटः इत्यादौ। तथैव अत्रापि अभेदेनान्वयः स्यात्। किन्तु प्रकृते तु वाराणसीस्थदेवदत्तस्य अयोध्यास्थदेवदत्तेन सह अभेदः नैव सम्भवतीति कृत्वा अत्र लक्षणा स्वीक्रियते। ततश्च तत्पदस्य केवलं देवदत्ते लक्षणा, एवञ्च इदम्पदस्यापि देवदत्ते लक्षणा क्रियते। ततश्च सः अयम् इत्यनयोः देवदत्तः इत्येवार्थः भवति। अत्र या लक्षणा सा च जहदजहल्लक्षणा कारणं हि प्रकृते विशिष्टवाचकशब्दः तत् इति शब्दः, इदम् इति शब्दः च। अत्र च लक्षणया तत्पदं वाराणसीस्थरूपम् अर्थं विहाय केवलं विशेष्यांशं देवदत्तमेव बोधयति। एवमेव इदम्पदं विशेषणांशभूतम् अयोध्यायास्थरूपं विहाय विशेष्यांशं देवदत्तमेव बोधयति। ततश्च पदद्वयमपि स्वार्थैकदेशं विहाय एकदेशे वर्तते। अतः अत्र जहदजहल्लक्षणा इति।

**वेदान्तपरिभाषाकारमतम्**

काकेभ्यः दधि रक्ष्यताम् इति वक्त्रा उक्ते दध्युपघातकेभ्यः दधि रक्ष्यताम् इति श्रोता जानाति। अन्यथा केवलं काकेभ्य एव दधि रक्षेत् , बिडालादिभ्यः न रक्षेत्। अतस्तत्र काकपदस्य काकाकाकसाधारणेषु दध्युपघातकेषु लक्षणा उपेया। सा च न जहल्लक्षणा, दध्युपघातकत्वेन शक्यभूतकाकस्यापि ग्रहणेन शक्यार्थापरित्यागात्। नाप्यजहल्लक्षणा काकपदशक्यस्य काकत्वस्य परित्यागात्। अतो अजहल्लक्षणा इति भावः।

## ९.३) शाब्दबोधे सहकारिकारणानि

जलेन सिञ्चति इति वाक्यात् बोधः भवति, किन्तु वह्निना सिञ्चति इति वाक्यात् बोधः न भवति। तत्र किं कारणम् इति चेत् उच्यते - यथा बोधं प्रति करणं वाक्यमस्ति, कारणं वृत्तिज्ञानम् अस्ति। तथैव बोधं प्रति कानिचित् सहकारिकारणानि अपि सन्ति। तानि च आकाङ्क्षायोग्यतासत्तयः तात्पर्यज्ञानं चेति चत्वारि। अत्र क्रमेण एतेषां स्वरूपं प्रतिपाद्यते।

### ९.३.१) आकाङ्क्षा

तत्र पदार्थानां परस्परजिज्ञासाविषयत्वम् आकाङ्क्षात्वम्। अर्थात् एकपदार्थज्ञानजन्यापरपदार्थज्ञानेच्छाविषयत्वयोग्यत्वम् इति आकाङ्क्षालक्षणम्। तथाहि ददाति इत्युक्तौ तदर्थोपस्थितौ च सत्यां कः ददाति, कं ददाति, केन ददाति, कस्मै ददाति, कस्मात् ददाति, कस्मिन् ददाति इति तत्तत्कारकविषयिणी जिज्ञासा भवति। एवमेव देवदत्तः इत्युक्तौ किं करोति इति क्रियाविषयणी जिज्ञासा भवति। एवञ्च क्रियाज्ञानेन कारकस्य कारकज्ञानेन क्रियायाः च जिज्ञासा समुदेति। तस्मात् क्रियाकारकयोर्मध्ये आकाङ्क्षा वर्तते। एवमेव यथा राज्ञः इत्युक्ते कस्य इति जिज्ञासा समुदेति, अपि च पुरुषः इत्युक्ते कस्य इति जिज्ञासा उदेति तस्मात् राजपदपुरुषपदयोः परस्परम् आकाङ्क्षा विद्यते इति भावः। एवमन्यत्रापि बोध्यम्। आकाङ्क्षासत्त्वे च शाब्दबोधः भवति। यत्र च आकाङ्क्षा न तिष्ठति तत्र शाब्दबोधः नैव भवति।

## १.३.२) योग्यता

तात्पर्यविषयसंसर्गाबाधः योग्यता। अत्र तात्पर्यविषयः इति पदस्य अर्थः वक्तुः इच्छाविषयः। संसर्गः इत्यस्य एकपदार्थेऽपरपदार्थसम्बन्धः इत्यर्थः। अबाधः इत्यस्य बाधाभावः इत्यर्थः। एवञ्च लक्षणार्थः भवति वक्तुरिच्छाविषयीभूतः यः एकपदार्थेऽपरपदार्थसम्बन्धः तस्य बाधाभावः एव योग्यता। यथा जलेन सिञ्चति इति वाक्यं विद्यते। अत्र जलपदस्य जलम् इत्यर्थः, सिञ्च इति धातोः सेचनम् इत्यर्थः। तत्र जलस्य सेचने करणत्वसम्बन्धेन अन्वयः भवति। धात्वर्थस्य तिबर्थे कृतौ अन्वयः भवति। तेन वाक्यस्यार्थो भवति जलकरणकसेचनानुकूलकृतिमान् इति। एतेनेदं सुस्पष्टं यत् जलस्य सेचने करणत्वसम्बन्धेनान्वयः भवति। तस्मात् प्रकृतवाक्ये वक्तुः इच्छाविषयभूतः सम्बन्धः करणत्वसम्बन्धः। तस्य च बाधो न भवति। कारणं हि सेचनस्य करणं द्रवद्रव्यपदार्थः एव भवति। जलञ्च द्रवद्रव्यमेवास्ति। तस्मात् जलेन सिञ्चति इत्यादौ तात्पर्यविषयसंसर्गाबाधस्य सत्त्वात् योग्यता अस्ति। अत एव इदं वाक्यं योग्यमिति उच्यते। योग्यतावशात् च प्रकृतवाक्येन बोधः भवति। किन्तु वह्निना सिञ्चति इति वाक्यं केनचित् उक्तम्। अत्र वह्निपदस्य वह्निः इत्यर्थः, सिञ्च इति धातोः सेचनम् इत्यर्थः। तत्र वह्नेः सेचने करणत्वसम्बन्धेन अन्वयः स्यात्। धात्वर्थस्य तिबर्थे कृतौ अन्वयः स्यात्। तेन अस्यापि वाक्यस्यार्थः स्यात् वह्निकरणकसेचनानुकूलकृतिमान् इति। तस्मात् प्रकृतवाक्ये वक्तुः इच्छाविषयभूतः सम्बन्धः करणत्वसम्बन्धः इति समायाति। तस्य च बाधो वर्तते। कारणं हि सेचनस्य करणं द्रवद्रव्यपदार्थः एव भवति। वह्निस्तु द्रवद्रव्यं नास्ति। तस्मात् अत्र योग्यता नास्ति। एवञ्च इदं वाक्यं योग्यं नास्ति अपितु अयोग्यं विद्यते। अतः अत्र योग्यतारूपकारणस्य अभावेन वह्निना सिञ्चति इति वाक्यात् बोधः न भवति।

## १.३.३) आसत्तिः

अव्यवधानेन पदजन्यपदार्थोपस्थितिः आसत्तिः।

**अयं भावः-** शाब्दबोधे पदजन्यपदार्थोपस्थितिः कारणम् अस्ति। ततश्च ययोः पदार्थयोः परस्परम् अन्वयः इष्टः तयोः पदार्थयोः अव्यवधानेन उपस्थितिः आसत्तिः। तत्र पदार्थानाम् अव्यवधानेन उपस्थितिः कदा भवति कदा व्यवधानेन भवति इति चेत् अत्र व्यवधानं पदान्तरकृतं कालकृतं च ग्राह्यम् अस्ति। अर्थात् ययोः पदार्थयोः मध्ये अन्वयः इष्टः तद्वाचकयोः पदयोः मध्ये यदि पदान्तरकृतं कालकृतं च व्यवधानं न तिष्ठति तत्र पदाभ्यां स्वार्थस्य अव्यवधानेन उपस्थितिः भवति। तेन तत्र आसत्तिः तिष्ठति ततश्च तत्र शाब्दबोधः भवति। यथा गिरिः वह्निमान् इत्यादौ गिरिपदार्थवह्निमत्पदार्थयोः परस्परम् अन्वयः इष्टः, तद्वाचकपदयोः गिरिवह्निमत्पदयोः मध्ये कस्यचित् अन्यस्य पदान्तरस्य कालस्य वा व्यवधानं नास्ति। अतः पूर्वं गिरिपदात् पर्वतस्योपस्थितिः भवति, तदव्यवधानेनैव अग्निमत्पदात् अग्निमदर्थस्य भवति। अतः अत्र आसत्तिः अस्ति। तेन च गिरिः अग्निमान् इति वाक्यात् अग्निमदभिन्नगिरिः इति बोधः भवति। एवमेव देवदत्तेन भुक्तम् इत्युक्तौ देवदत्तपदार्थभोजनपदार्थयोः परस्परम् अन्वयः इष्टः, तद्वाचकपदयोः देवदत्तभुक्तपदयोः मध्ये कस्यचित् अन्यस्य पदान्तरस्य कालस्य च व्यवधानं नास्ति। अतः पूर्वं देवदत्तपदेन देवदत्तरूपार्थस्य उपस्थितिः भवति। तदव्यवधानेनैव भुक्तम् इत्यस्मात् भोजनरूपार्थस्य उपस्थितिः भवति। तेन अत्र आसत्तिः अस्तीति कृत्वा अस्मात् वाक्यात्



देवदत्तकर्तृकभोजनम् इति बोधः भवति। परन्तु यत्र ययोः पदार्थयोः परस्परम् अन्वयः इष्टः, तद्वाचकपदयोः मध्ये पदान्तरकृतं कालकृतं वा व्यवधानम् अस्ति, चेत् तत्र आसत्तिः नैव तिष्ठति, आसत्त्यभावे च तत्र शाब्दबोधः न भवति। यथा केनचित् जनेन गिरिः भुक्तम् अग्निमान् देवदत्तेन इत्युक्तम्। तत्र गिरिपदात् पर्वतार्थस्योपस्थितिः भवति। भुक्तपदात् भोजनार्थस्य उपस्थितिः भवति। अग्निमत्पदात् अग्निमदर्थस्योपस्थितिः भवति। देवदत्तपदात् देवदत्तार्थस्योपस्थितिः भवति। तृतीयाविभक्तेः करणार्थस्योपस्थितिः भवति। एवमुपस्थितौ सत्यां गिरिपदार्थस्य अग्निमत्पदार्थेन सह अन्वयः इष्टः किन्तु तद्वाचकयोः गिरिपदवह्निमत्पदयोः मध्ये भुक्तपदस्य व्यवधानेन गिरिपदार्थाग्निमत्पदार्थयोः अव्यवधानेन उपस्थितिः न जाता। अतः प्रकृतस्थले आसत्तिः नास्तीति कृत्वा शाब्दबोधः न भवति। एवमेव भुक्तपदार्थस्य देवदत्तपदार्थेन सहान्वयः इष्टः किन्तु तद्वाचकयोः देवदत्तपदभुक्तपदयोः मध्ये अग्निमत्पदस्य व्यवधानेन भुक्तपदार्थदेवदत्तपदार्थयोः अव्यवधानेन उपस्थितिः नैव भवति। अतः अत्रापि आसत्तिः नास्तीति कृत्वा न शाब्दबोधः इति भावः। एवमेव यत्र केनचित् जनेन गिरिः इति प्रोक्तम्, पुनः एकहोरानन्तरं वह्निमान् इति प्रोक्तम्, तत्र गिरिपदवह्निमत्पदयोः मध्ये कालकृतस्य व्यवधानस्य सत्त्वात् उभाभ्यां पदाभ्यां कालकृतव्यवधानेनैव उपस्थितिः भवति। अतः तादृशस्थले अपि शाब्दबोधः न भवति।

## १.३.४) तात्पर्यम्

तात्पर्यमपि शब्दजन्यबोधे सहकारिकारणं भवति। वक्तुः तात्पर्यं ज्ञात्वैव श्रोत्रा निश्चीयते यद् अस्य वाक्यस्य अयमर्थ इति, अस्मिन् च अर्थे तात्पर्यं नास्ति इति। एवञ्च शब्दजन्यबोधे कारणीभूतस्य तात्पर्यस्य किं लक्षणमिति चेत् उच्यते **तत्प्रतीतिजननयोग्यत्वं तात्पर्यम्**। तस्य अर्थस्य प्रतीतेः ज्ञानस्य जननयोग्यता एव तात्पर्यम् इति उच्यते। अत्र यदर्थपरत्वं वाक्यस्य साधनीयम्, तत्पदेन तस्यार्थस्य ग्रहणं कर्तव्यम्। तथा च तदर्थानुभवजननस्वरूपयोग्यत्वं तात्पर्यस्य लक्षणं प्रतिफलति। यथा गेहे घटः इत्यत्र गेहशब्दात् गृहस्य, सप्तम्या वृत्तित्वस्य, घटशब्दात् घटस्य चोपस्थितौ, गेहघटयोः संसर्गस्य आधाराधेयभावस्य गेहवृत्तिघटः इत्याकारकः बोधो जायते। अतः गेहे घटः इति वाक्यस्य गेहवृत्तिघटः इत्याकारकार्थपरत्वं साधनीयम्। ततश्च तत्पदेन गेहवृत्तिघटः इत्यस्य ग्रहणम्। तादृशार्थस्य या प्रतीतिः तस्याः जननयोग्यता च अस्मिन् वाक्ये अस्ति। कारणम् इदं वाक्यं गेहवृत्तिघटः इत्याकारकबोधं जनयति। ततश्च गेहवृत्तिघटः इत्याकारकानुभवजननस्वरूपं योग्यं गेहघटसंसर्गजननस्वरूपयोग्यञ्च अस्ति। तदेव च तात्पर्यमस्ति। अतः एव च गेहे घटः इति वाक्यस्य अस्मिन् गेहवृत्तिघटः इति अर्थे तात्पर्यम् अस्ति इति व्यवहारः भवति।

गेहे घटः इति वाक्यं गेहवृत्तिपटः इत्याकारबोधं नैव जनयति। तस्मात् इदं वाक्यम् गेहवृत्तिपटः इत्याकारकानुभवजननस्वरूपयोग्यं नास्ति। कुतः इति चेत् उच्यते - अस्य वाक्यस्य गेहवृत्तिपटः इत्यर्थे तात्पर्यं नास्ति। यतोऽहि यदि गेहे घटः इति वाक्यस्य गेहवृत्तिपटः इत्यर्थे तात्पर्यं स्यात्, तर्हि इदं वाक्यं गेहवृत्तिपटः इत्याकारकानुभवजननस्वरूपयोग्यम् अपि स्यात्। तेन च अस्मात् वाक्यात् गेहवृत्तिपटः इत्याकारकः अपि बोधः स्यात्। किन्तु गेहे घटः इति वाक्यस्य गेहवृत्तिपटः इत्यर्थे तात्पर्यं नास्ति। तस्मात् तथा बोधः न भवति।



अथ तत्प्रतीतिजननयोग्यत्वं तात्पर्यम् इति लक्षणे सत्यपि यदा कश्चित् पुरुषः भोजनकाले लवणानयनेच्छया सैन्धवमानय इति वाक्यं प्रोक्तवान्। तदा सैन्धवमानय इति वाक्यं लवणानयनविषयकबोधपरं तु अस्त्येव किन्तु अश्वानयनविषयकबोधपरमपि भवितुमर्हति। तेन च लवणानयनेच्छया उच्चारितात् सैन्धवमानय इति वाक्यात् अश्वमानय इत्याकारकार्थस्यापि प्रतीतिः स्यात्। परन्तु भोजनकाले अश्वानयनविषयकबोधः नेष्टः। एवमेव कश्चित् पुरुषः यात्राकाले अश्वानयनेच्छया सैन्धवमानय इति वाक्यं प्रोक्तवान्। तदा सैन्धवमानय इति वाक्यम् अश्वानयनविषयकबोधपरं तु भवत्येव, किन्तु लवणानयनविषयकबोधपरमपि भवितुमर्हति। तेन च अश्वानयनेच्छया उच्चारितात् सैन्धवमानय इति वाक्यात् लवणमानय इत्याकारकार्थस्यापि प्रतीतिः स्यात्। परन्तु यात्राकाले लवणानयनविषयकबोधः नेष्टः। तर्हि तत्प्रतीतिजननयोग्यत्वम् इति तात्पर्यलक्षणं दोषयुक्तं प्रतिभाति। अतः दर्शितदोषस्य वारणाय वेदान्तिभिः तात्पर्यस्य लक्षणं परिष्कृतम्। परिष्कृतस्य लक्षणस्य च स्वरूपं विद्यते तत्प्रतीतिजननयोग्यत्वे सति तदन्यप्रतीतीच्छयानुच्चरितत्वं तात्पर्यत्वमिति। एवञ्च भोजनकाले प्रयुक्तं सैन्धवमानय इति वाक्यं लवणमानय इत्यर्थबोधनेच्छया उच्चरितम्, अश्वानयनप्रतीतीच्छया च नोच्चरितम्। तस्मात् भोजनकाले प्रयुक्तं सैन्धवमानय इति वाक्यं लवणानयनप्रतीतिजननयोग्यम् अस्ति, अपि च लवणानयनभिन्नाश्वानयनप्रतीतीच्छयानुच्चरितम् अपि अस्ति। अतः भोजनकाले सैन्धवमानय इति वाक्यात् लवणानयनविषयकबोधः एव भवति। न तु अश्वानयनविषयकबोधः इति बोधः अपि। एवञ्च यात्राकाले प्रयुक्तं सैन्धवमानय इति वाक्यं अश्वमानय इत्यर्थबोधनेच्छया उच्चरितम्, लवणानयनप्रतीतीच्छया च नोच्चरितम्। तस्मात् यात्राकाले प्रयुक्तं सैन्धवमानय इति वाक्यं अश्वानयनप्रतीतिजननयोग्यम् अस्ति, अपि च अश्वानयनभिन्नलवणानयनप्रतीतीच्छयानुच्चरितम् अपि अस्ति। अतः यात्राकाले सैन्धवमानय इति वाक्यात् अश्वानयनविषयकबोधः एव भवति। न तु लवणानयनविषयकबोधः अपि। एवञ्च च यात्राकाले सैन्धवमानय इति वाक्यं अश्वानयनविषयकबोधम् एव जनयति, न तु लवणानयनविषयकबोधमपि।

## नैयायिकमतखण्डनम्

नैयायिकास्तावद् तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यमाहुः। तदर्थो हि- वक्ता परत्र स्वबोधसदृशबोधोत्पत्तये अस्माद् वाक्याद् अयमर्थो बोद्धव्य इत्याकारिकया इच्छया वाक्यमुच्चारयति। तत्र वाक्यस्य एतदर्थप्रतीतीच्छया उच्चारणाद् यत् श्रोतुः तत्प्रतीतीच्छया उच्चरितत्वावधारणम् तादृशं तत्प्रतीतीच्छया उच्चरितत्वम् तात्पर्यम् इति।

नैयायिकानाम् अस्मिन् लक्षणे दोषः अस्ति। तथाहि- यो वेदार्थं न जानाति परन्तु वेदवाक्यानि उच्चारयति तदा श्रोतुः अर्थबोधस्तु भवति यदि श्रोता वेदार्थावगमे अधिकारी स्यात्। अत्र वक्तुः इच्छा नास्ति। स तु अर्थमेव न जानाति, कुतः तदुच्चारितवाक्यात् अर्थबोधस्य इच्छा स्फुरति। तेन तत्र तत्प्रतीतीच्छया उच्चरितत्वं तात्पर्यलक्षणं स्वीकृतं चेत् श्रोतुः तद्वाक्याद् अर्थबोधो न स्यात्। भवति च तस्मात् तदर्थबोधः। अतः तत्प्रतीतीच्छया उच्चरितत्वं न तात्पर्यस्य लक्षणम्।

तत्र नैयायिकः स्वपक्षं द्रढयति यत् वक्ता अर्थं जानाति न वा इति श्रोता न जानाति। किञ्च श्रोता भ्रमात् तात्पर्यं गृह्णाति। एवं तात्पर्यज्ञानेन शाब्दबोधः सम्भवति। अतः न दोष इति। तदा सिद्धान्ती वदति



यत् यदा तावत् वक्ता जानाति न वा इति श्रोता न जानाति, तत्र तात्पर्यभ्रमाद् भवतु शाब्दबोधः। तथापि यदि वक्ता अर्थं न जानाति इति श्रोता निश्चयेन जानाति तादृशस्थले किं कर्तव्यम्। वक्तुः अर्थज्ञानशून्यत्वम् अवधारितं चेत् श्रोतुः तात्पर्यभ्रमः न सम्भवति। यतो हि वक्ता अर्थज्ञानशून्योस्ति इति ज्ञानं तात्पर्यभ्रमस्य विरुद्धम् अस्ति।

नैयायिकः स्वपक्षं पुनः स्थापयति यत् वक्ता अर्थं नापि जानीयात् परन्तु वेदस्य कस्मात् वाक्यात् कः अर्थः बोद्धव्य इति ईश्वरस्य तु तात्पर्यमस्ति एव। अतः तादृशतात्पर्यज्ञानेन स्यात् शाब्दबोधः इति। तदा सिद्धान्ती वदति यत् पूर्वमीमांसकाः ईश्वरं नाभ्युपगच्छन्ति किन्तु ते वेदवाक्यानि शृण्वन्ति चेत् व्युत्पन्नानां शाब्दबोधस्तु भवति एव। अतः इदं कथमपि समर्थयितुं न शक्यते।

## १.४) आगमभेदः

वेदान्तशास्त्रे आगमप्रमाणस्य द्वौ भेदौ वर्णितौ पौरुषेयः अपौरुषेयश्च। तत्र पौरुषेयशब्दस्य व्युत्पत्तिलभ्यः अर्थः भवति पुरुषेण कृतं पौरुषेयमिति। तद्भिन्नम् अपौरुषयम्। अर्थात् पुरुषेण यन्न कृतं तदपौरुषेयम् इति। तत्र रामायणमहाभारतादिग्रन्थाः वाल्मीकिप्रभृतिभिः पुरुषैः कृताः इति कृत्वा एते पौरुषेयाः सन्ति। परन्तु वेदानां विषये शास्त्रज्ञेषु मतभेदाः सन्ति। तत्र मीमांसकाः वेदाः नित्याः सन्ति, तेषां रचयिता कोऽपि नास्ति इत्यतः वेदाः न केनापि पुरुषेण कृताः। तस्मात् वेदाः अपौरुषेयाः। नैयायिकाः वदन्ति यत् वेदाः ईश्वरकृताः। तस्माद् वेदाः पौरुषेयाः। वेदान्तिनः वदन्ति वेदाः परमेश्वरेण पुरुषेण एव कृताः। तथापि वेदाः अपौरुषेयाः। परन्तु यदि वेदाः पुरुषेण कृताः तर्हि पुरुषेण यत् कृतं तत्तु पौरुषेयम् इति उच्यते। अतः पुरुषेण कृताः अपि वेदाः कथं वेदान्तमते अपौरुषेयाः इति प्रश्नः जायते। तदा वेदान्तिनः वदन्ति यत् नहि पुरुषेण कृतं पौरुषयेम् इति तद्भिन्नं च अपौरुषेयम्। अपितु वेदान्तनये पौरुषेयस्य अपौरुषेयस्य च भिन्ना परिभाषा विद्यते। यया वेदानां अपौरुषेयत्वम्, वेदभिन्नानां च पौरुषेयत्वं सिध्यति। तथाहि-

### पौरुषेयः

तत्र को नाम पौरुषेयः इति चेत् सजातीयोच्चारणानपेक्षोच्चारणविषयः पौरुषेयः। अर्थात् यदुच्चारणं सजातीयोच्चारणं नाम स्वसमानानुपूर्वीकम् उच्चारणान्तरं नापेक्षते तत् सजातीयोच्चारणानपेक्षोच्चारणम्। तादृशस्य उच्चारणस्य यः विषयः सः पौरुषेयः। साजात्यम् अत्र आनुपूर्व्याः ग्राह्यम्। तथा च यस्य वाक्यस्य समानानुपूर्वीकवाक्यान्तरोच्चारणनिरपेक्षम् उच्चारणं क्रियते तत् पौरुषेयम्। यथा महाभारतादिकम्। महाभारतादिकं समानानुपूर्वीकवाक्यान्तरोच्चारणनिरपेक्षम् उच्चार्यते। कारणं महाभारतसमानानुपूर्वीकं द्वितीयं महाभारतान्तरं नास्ति। अपि च स्वसमानानुपूर्वीकोच्चारणसापेक्षोच्चारणे फलमपि नास्ति। तस्मात् महाभारतादीनाम् उच्चारणं स्वसमानानुपूर्वीकवाक्यान्तरोच्चारणनिरपेक्षमेव उच्चारणं क्रियते। एवमेव रामायणादीनामपि। तस्माद् रामायणम्, महाभारतम्, अष्टादशपुराणानि, कालीदासादिप्रणीतकाव्यानि च पौरुषेयाणि। अपि च वेदभिन्नवाङ्मयमात्रं पौरुषेयमिति भावः।

**अयम्भावः**

व्यासवाल्मीकप्रभृतयः ऋषयः प्रतिसर्गं भिन्नं भिन्नं महाभारतम्, रामायणादिकं च रचयन्ति। तस्मात् एतेषां ग्रन्थानाम् आनुपूर्वी प्रतिसर्गं भिन्ना भिन्ना भवति। अतः व्यासः पूर्वसर्गकृतं यत् महाभारतम्, तद्भिन्नमेव महाभारतम् अपरस्मिन् सर्गे रचयति। एवम् अन्येऽपि। ततश्च महाभारतादीनाम् उच्चारणं स्वसमानानुपूर्वीकवाक्यान्तरोच्चारणनिरपेक्षमेव भवति। तस्मात् एते ग्रन्थाः पौरुषेयाः सन्ति। किन्तु आप्तपुरुषैः रचिताः। अतः एते सर्वे अपि प्रमाणभूताः ग्रन्थाः।

**अपौरुषेयः**

को नाम अपौरुषेयः इति चेत् यत् वाक्यं नियमेन समानानुपूर्वीकवाक्यान्तरोच्चारणसापेक्षमेवोच्चार्यते तद् अपौरुषेयम्। यथा वेदवाक्यम्। कारणं परमेश्वरः पूर्वसर्गसिद्धस्य वेदस्य समानानुपूर्वीकं वेदं परस्मिन् सर्गे रचयति। न तु पूर्वसर्गसिद्धवेदभिन्नानुपूर्वीकं वेदम्। तस्मात् प्रतिसर्गं वेदस्य आनुपूर्वी भिन्ना न भवति। अपि तु समाना एव तिष्ठति। अतः पूर्वसर्गसिद्धस्य समानानुपूर्वीकवेदान्तरस्य सत्त्वात्, तत्समानुपूर्वीकमेव वेदम् परस्मिन् सर्गे परमेश्वरः उच्चारयति। तस्मात् वेदानां समानानुपूर्वीकवाक्यान्तरोच्चारणसापेक्षमेवोच्चारणं भवति। अतः वेदः अपौरुषेयः।

**अयं भावः-** परमेश्वरेण सृष्टिनिर्माणकाले वेदस्यापि रचना कृता। किन्तु तैः नवीनस्य रचना न कृता, अपि तु पूर्वसिद्धस्यैव वेदस्य रचना कृता। अर्थात् यदानुपूर्वीकं वेदवाक्यं पूर्वम् आसीत् तत्समानानुपूर्वीकमेव रचितम्। अत एव वेदानां रचनाविषये प्रोक्तमपि धाता यथापूर्वमकल्पयत्। अर्थात् यथापूर्वम् आसीत् तथैव कल्पितं न तु नवीनम्। अत एव प्रोक्तमपि वेदान्तपरिभाषायाम्-

> **'तथा च सर्गाद्यकाले परमेश्वरः पूर्वसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं रचितवान्, न तु तद्विजातीयमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वम्। भारतादीनां तु सजातीयोच्चारणानपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्।'**

सर्वज्ञादीश्वरात् पूर्वक्रमसदृशक्रमवद्वेदराशेरुत्पन्नत्वात्। एवञ्च वेदवाक्यं पूर्वसर्गसिद्धसमानानुपूर्वीकवाक्यान्तरोच्चारणसापेक्षम् एव उच्चार्यते। अतः वेदः अपौरुषेयः।



## पाठगतप्रश्नाः

२७. वेदान्तमते कति प्रमाणानि सन्ति।

२८. शब्दप्रमाणस्य लक्षणं किम्।

२९. वृत्तिलक्षणं किम्।

३०. शक्तिर्नाम का।

३१. लक्षणा का।



३२. केवललक्षणा का।

३३. जहल्लक्षणा का।

३४. अजहल्लक्षणा का।

३५. जहदजहल्लक्षणा का।

३६. आकाङ्क्षा का।

३७. आसत्तिः का।

३८. योग्यता का।

३९. तात्पर्यलक्षणं किम्।

४०. पौरुषेयत्वं नाम किम्।

४१. अपौरुषेयत्वं नाम किम्।



## पाठसारः

अस्मिन् पाठे शब्दप्रमाणस्य निरुपणं विद्यते। तत्र शाब्दबोधस्य करणं शब्दप्रमाणम् इत्युच्यते। शब्दात् जायमानः बोधः च शाब्दबोधः इत्यभिधीयते। शब्दजन्यबोधं प्रति च वृत्तिज्ञानं कारणं भवति। वृत्तिश्च वेदान्तनये शक्तिलक्षणाभेदात् द्विविधा वर्तते। तत्र पदानामर्थेषु मुख्या वृत्तिः शक्तिः इत्युच्यते। स्वबोध्यसम्बन्धः च लक्षणा भवति। ततः परं लक्षणायाः भेदाः निरूपिताः। तदन्तरं चात्र शाब्दबोधं प्रति सहकारिकारणानि निरुपितानि। तानि चत्वारि च सन्ति। आकाङ्क्षा योग्यता आसत्तिः तात्पर्यज्ञानं चेति। ततः परं आगमस्य भेदयोः पौरुषेयापौरुषेययोः वर्णनं विहितम्।



## पाठान्तप्रश्नाः -

१. शब्दप्रमाणलक्षणं प्रतिपादयन्तु।

२. शक्तिस्वरूपं प्रतिपादयन्तु।

३. लक्षणस्वरूपं लिखन्तु।

४. लक्षणाभेदान् वर्णयन्तु।

५. लक्षितलक्षणास्वरूपं सोदाहरणं प्रतिपादयन्तु।

६. तात्पर्यस्वरूपं प्रतिपादयन्तु।

७. पौरुषेयत्वम् अपौरुषेयत्वं च वर्णयन्तु।

८. आकाङ्क्षास्वरूपं प्रतिपादयन्तु।



९. आसत्तिस्वरूपं प्रतिपादयन्तु।

१०. जहल्लक्षणास्वरूपं प्रतिपादयन्तु।

११. अजहल्लक्षणास्वरूपं प्रतिपादयन्तु।

१२. जहदजहल्लक्षणास्वरूपं लिखन्तु।

१३. योग्यतास्वरूपं प्रतिपादयत।

१४. लक्षणायां बीजं किमिति प्रतिपादयत।

१५. अन्वयानुपपत्तिः लक्षणाबीजमिति मतस्य निराकरणं कुरुत।



## पाठगतप्रश्नोत्तराणि -

१. वेदान्तनये षट् प्रमाणानि सन्ति।

२. मानान्तराबाधिततात्पर्यविषयीभूतसंसर्गानुभावकवाक्यत्वं शब्दप्रमाणत्वम्

३. शाब्दबोधानुकूलपदपदार्थसम्बन्धत्वं वृत्तित्वम्।

४. शक्तिर्नाम पदानामर्थेषु मुख्या वृत्तिः।

५. स्वबोध्यसम्बन्धः लक्षणा।

६. शक्यसाक्षात्सम्बन्धः केवललक्षणा।

७. शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा।

८. यत्र शक्यार्थमन्तर्भाव्यैवार्थान्तरप्रतीतिस्तत्र अजहल्लक्षणा।

९. यत्र विशिष्टवाचकः शब्दः स्वार्थैकदेशं विहायैकदेशे वर्तते, तत्र जहदजहल्लक्षणा।

१०. पदार्थानां परस्परजिज्ञासाविषयत्वम् आकाङ्क्षा।

११. अव्यवधानेन पदजन्यपदार्थोपस्थितिः आसत्तिः।

१२. तात्पर्यविषयसंसर्गाबाधः योग्यता।

१३. तत्प्रतीतिजननयोग्यत्वे सति तदन्यप्रतीतीच्छयानुच्चरितत्वं तात्पर्यत्वम्।

१४. सजातीयोच्चारणानपेक्षोच्चारणविषयः पौरुषेयः।

१५. समानानुपूर्वीकवाक्यान्तरोच्चारणसापेक्षमेवोच्चार्यते तद् अपौरुषेयम्।

॥ इति नवमः पाठः ॥



## १०

# अर्थापत्तिखण्डः अनुपलब्धिखण्डः च

### प्रस्तावना

वेदान्तशास्त्रे षट् प्रमाणानि सन्ति। तानि च प्रत्यक्षम् अनुमानम् उपमानम् शब्दः अर्थापत्तिः अनुपलब्धिश्चेति। तेषु प्रत्यक्षप्रमाणविषये अनुमानविषये उपमानविषये शब्दप्रमाणविषये च पूर्वपाठेषु विस्तरेण पठितम्। अस्मिन् पाठे अर्थापत्तिप्रमाणविषये अनुपलब्धिप्रमाणविषये च आलोच्यते।



### उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- अर्थापत्तिप्रमां ज्ञास्यति।
- अर्थापत्तिप्रमाणं ज्ञास्यति।
- अर्थापत्तिभेदान् ज्ञास्यति।
- अनुपलब्धिप्रमाणम् अवगच्छेत्।
- अभावभेदान् ज्ञास्यति।
- प्रामाण्यवादस्य सामान्यपरिचयं प्राप्नुयात्।

### १०.१) अर्थापत्तिप्रमाणम्

अर्थापत्तिप्रमाणम् इति शब्दस्य अर्थः भवति - अर्थापत्तिप्रमाकरणम् इति। तत्र कस्याः प्रमायाः करणम् इति चेत् अर्थापत्तिप्रमायाः एव करणमत्र ग्राह्यम्। कारणं हि अर्थापत्तिशब्दः प्रमावाचकः अपि अस्ति, प्रमाणवाचकः अपि अस्ति। यतोहि यदा अर्थस्य आपत्तिः इति अर्थापत्तिः इति षष्ठीसमासः स्वीक्रियते तदा अयं शब्दः प्रमावाचकः भवति। अत्र आपत्तिशब्दस्यार्थः कल्पनमिति। एवञ्च अस्य अर्थः भवति अर्थकल्पनम् इति। यदा च अर्थस्य आपत्तिः यस्मात् इति अर्थापत्तिः इति बहुव्रीहिसमासः स्वीक्रियते तदा अयं शब्दः प्रमाणवाचकः भवति। अस्य च अर्थः भवति अर्थकल्पनकरणम् इति। ततश्च अर्थापत्तिप्रमायाः यत् करणं तदेव अर्थापत्तिप्रमाणम्। एवञ्च अर्थापत्तिप्रमाकरणत्वम् अर्थापत्तिप्रमाणत्वम् इति लक्षणं फलितं भवति। ततश्च अर्थापत्तिप्रमाणस्य ज्ञानार्थम् अर्थापत्तिप्रमायाः ज्ञानमावश्यकं भवति। अतः पूर्वम् अर्थापत्तिप्रमायाः लक्षणं प्रतिपाद्यते।

## १०.२) अर्थापत्तिप्रमा

उपपाद्यज्ञानेनोपपादककल्पनम् अर्थापत्तिः। अर्थात् उपपाद्यज्ञानेन उपपादकस्य कल्पना एव अर्थापत्तिः प्रमा। तत्र किं नाम उपपाद्यम्, किञ्च उपपादकमिति चेत् - येन विना यदनुपपन्नम्, तत् तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिः तत् तत्रोपपादकम्। यथा पीनोऽयं देवदत्तः दिवा न भुङ्क्ते इत्यादौ दिवाऽभुञ्जाननिष्ठपीनत्वम् उपपाद्यम् अस्ति। (पीनः स्थूलः इति। ) रात्रिभोजनञ्च उपपादकम् अस्ति। तत्र उपपाद्यस्य लक्षणे येन इति पदेन उपपादकस्य ग्रहणं कर्तव्यम्। यथा प्रकृते येन रात्रिभोजनेन विना यद् दिवाऽभुञ्जाननिष्ठपीनत्वम् अनुपपन्नम् अतः तत् दिवाऽभुञ्जाननिष्ठपीनत्वम् उपपाद्यम्। उपपादकलक्षणे प्रथमेन यस्य इति पदेन उपपादकस्य ग्रहणं कर्तव्यम्। यथा यस्य रात्रिभोजनस्य अभावे यस्य दिवाऽभुञ्जाननिष्ठपीनत्वस्य अनुपपत्तिः, अतः तत् रात्रिभोजनम् उपपादकम्।

**अयमाशयः**

दिवाभोजनाभाववतः यदि रात्रिभोजनं न स्यात्, तदा तस्य पीनत्वं न स्यात्। दृश्यते च पीनत्वम्। अतस्तस्य पीनत्वस्य उपपत्तये (समर्थना) रात्रिभोजनं कल्पनीयम्। तेन कल्पनीयरात्रिभोजनेन पीनत्वस्योपपत्तौ रात्रिभोजनाभावे च पीनत्वस्यानुपपत्तौ पीनत्वम् उपपाद्यम्, रात्रिभोजनञ्च उपपादकम्। एवञ्च उपपाद्यज्ञानं करणं भवति। अर्थात् अर्थापत्तिप्रमाणं भवति। उपपादकज्ञानं फलं भवति। अर्थात् उपपदकज्ञानं प्रमा भवति। ततश्च पीनोऽयं देवदत्तः दिवा न भुङ्क्ते इत्यादौ दिवाऽभुञ्जाननिष्ठपीनत्वज्ञानेन रात्रिभोजनं कल्प्यते, अतः प्रकृते दिवाऽभुञ्जाननिष्ठपीनत्वज्ञानम् अर्थापत्तिप्रमाणम्। रात्रिभोजनज्ञानं च अर्थापत्तिप्रमा इति फलितम्।

### १०.२.१) उपपाद्यत्वलक्षणम् -

येन विना यदनुपपन्नम्, तत् तत्रोपपाद्यम् इति उपपाद्यस्य स्वरूपं प्रतिपादितम्। तस्यैव परिष्कृतं लक्षणं विद्यते - **तदभावव्यापकीभूताभावप्रतियोगित्वम् उपपाद्यत्वम्।** तस्य अभावः इति तदभावः। तदभावस्य व्यापकः अभावः इति तदभावव्यापकीभूताभावः। तदभावव्यापकीभूताभावस्य प्रतियोगी इति तदभावव्यापकीभूताभावप्रतियोगी। तस्य भावः इति तदभावव्यापकीभूताभावप्रतियोगित्वम्। अत्र तत्पदेन उपपादकत्वेन अभिमतस्य वस्तुनः परामर्शः। एवञ्च पीनः देवदत्तः दिवा न भुङ्क्ते इत्यादौ तत्पदेन उपपादकस्य रात्रिभोजनस्य ग्रहणम्। तस्य अभावः रात्रिभोजनाभावः। तस्य व्यापकीभूताभावः दिवाऽभुञ्जानत्वनिष्ठपीनत्वाभावः। यतोहि यत्र यत्र रात्रिभोजनाभावः - तत्र तत्र दिवाऽभुञ्जाननिष्ठपीनत्वाभावः इति प्रतीत्या रात्रिभोजनाभावस्य व्यापकीभूताभावः दिवाऽभुञ्जाननिष्ठपीनत्वाभावः। अत्र च दिवाऽभुञ्जाने रात्रिभोजनाभाववति पुरुषसामान्ये दिवाऽभुञ्जानत्वसमानाधिकरणपीनत्वाभावदर्शनमेव प्रमाणम्। ततश्च रात्रिभोजनाभावव्यापकीभूताभावः दिवाऽभुञ्जाननिष्ठपीनत्वाभावः, तस्य प्रतियोगि दिवाऽभुञ्जाननिष्ठपीनत्वम्, अतः प्रकृते दिवाऽभुञ्जाननिष्ठपीनत्वम् उपपाद्यम्।



## १०.२.२) उपपादकत्वलक्षणम् -

यस्याभावे यस्यानुपपत्तिः तत् तत्रोपपादकम् इति उपपादकस्य स्वरूपं प्रतिपादितम्। तस्यैव परिष्कृतं स्वरूपं अस्ति - **उपपाद्याभावव्याप्यभूताभावप्रतियोगित्वम् उपपादकत्वम्**। यथा पीनः देवदत्तः दिवा न भुङ्क्ते इत्यादौ उपपाद्यं दिवाऽभुञ्जाननिष्ठपीनत्वम्, तस्य अभावः दिवाऽभुञ्जाननिष्ठपीनत्वाभावः, तस्य व्याप्यभूतः अभावः रात्रिभोजनाभावः, यत्र यत्र रात्रिभोजनाभावः तत्र तत्र दिवाऽभुञ्जाननिष्ठपीनत्वाभावः इति प्रतीत्या रात्रिभोजनाभावस्य व्याप्यत्वात्। तस्य प्रतियोगि रात्रिभोजनम्। अतः रात्रिभोजनम् उपपादकम्।

## १०.२.३) अर्थापत्तिभेदः –

अर्थापत्तिः द्विविधा भवति। दृष्टार्थापत्तिः श्रुतार्थापत्तिः च।

### दृष्टार्थापत्तिः -

दृष्टेन शब्देतरप्रमाणप्रमितेन अर्थेन अदृष्टस्य अर्थस्य कल्पना दृष्टार्थापत्तिः इति प्रोच्यते। तथाहि - कश्चित् जनः कदाचित् समुद्रतटं गतवान्, तत्र च दूरात् समुद्रतटे पतितां शुक्तिम् दृष्टवान्। परन्तु दृष्टिदोषवशात् सः सम्यग् रूपेण न ज्ञातवान् यत् इयं शुक्तिः इति। किन्तु सः चिन्तितवान् इदं रजतम् इति। एवञ्च दोषवशात् तस्य शुक्तौ इदं रजतम् इति ज्ञानं जातम्। ततः परं यदा सः समीपं गत्वा दृष्टवान् तदा तस्य भ्रमस्य निराकरणं जातं यत् इदं रजतं नास्ति, अपितु शुक्तिः अस्ति। एवञ्च शुक्तिकादौ प्रतीयमानं रजतं यदि सत्यं स्यात् तर्हि कथं परक्षणे एव नेदं रजतमिति निषेधबुद्धिः स्यात् जनस्य। परन्तु भवति तस्य निषेधबुद्धिः। अतः शुक्तिकादौ प्रतीयमानं रजतं न सत्यम् अपितु मिथ्यैवेति इति सः जनः निश्चिनोति। अतः अत्र दृष्टेन अर्थेन अदृष्टस्य मिथ्यात्वरूपस्य अर्थस्य कल्पनां करोति जनः। अतः अत्र दृष्टार्थापत्तिः। नेदं रजतम् इति निषिध्यमानत्वज्ञानं प्रमाणभूता अर्थापत्तिः। प्रतीयमानं रजतं मिथ्या इति निश्चयः फलभूता अर्थात् प्रमाभूता अर्थापत्तिः। एवमन्यत्रापि बोध्यम्।

यथा शुक्तौ नेदं रजतम् इत्यादौ नेदं रजतम् इति उपपाद्यम् अस्ति। मिथ्यात्वम् च उपपादकम् अस्ति। तत्र उपपाद्यस्य लक्षणे येन इति पदेन उपपादकस्य ग्रहणं कर्तव्यम्। यथा प्रकृते येन मिथ्यात्वेन विना यद् नेदं रजतम् इति अनुपपन्नम्। अतः तत् नेदं रजतम् उपपाद्यम्। उपपादकलक्षणे प्रथमेन यस्य इति पदेन उपपादकस्य ग्रहणं कर्तव्यम्। यथा यस्य मिथ्यात्वस्य अभावे यस्य नेदं रजतम् इत्यस्य अनुपपत्तिः, अतः तत् मिथ्यात्वम् उपपादकम्।

### श्रुतार्थापत्तिः -

श्रुतेन अर्थेन आपत्तिः कल्पना क्रियते तत्र श्रुतार्थापत्तिः इति व्यवहारः भवति॥ यथा तरति शोकमात्मवित् इति श्रुतिः। आत्मवित् आत्मज्ञानवान् शोकं तरति बन्धरहितो भवति इत्यर्थः श्रुतिवाक्यस्य। एवञ्च अनया श्रुत्या आत्मज्ञानं बन्धविगमहेतुः इति प्रतिपाद्यते। किन्तु शाब्दी प्रतीतिरियं तदैव उपपन्ना भवति यदि शोकशब्दवाच्यस्य बन्धस्य मिथ्यात्वं स्यात् नान्यथा। कारणं न हि वास्तविकस्य (तात्त्विकस्य, सत्यस्य) अर्थस्य येन केनचित् ज्ञानेन नाशः भवितुं नार्हति। परन्तु



श्रुतिवाक्यं तु प्रमाणमेव। अतः श्रुतिवाक्यप्रामाण्येन कल्प्यते यत् न बन्धः सत्यः अपि तु मिथ्या एवेति। अत्र तरति शोकमात्मवित् इति वाक्यार्थबोधानुपपत्त्या बन्धमिथ्यात्वं कल्पितं भवति। एवञ्च बन्धमिथ्यात्वम् उपपादकम्, शाब्दी प्रतीतिः च उपपाद्या। ततश्च प्रकृते बन्धमिथ्यात्वं विना शाब्दी प्रतीतिः अनुपपन्ना। अतः तत् बन्धमिथ्यात्वम् उपपादकम्। यस्य बन्धमिथ्यात्वाभावे यस्य शाब्दज्ञानस्य अनुपपत्तिः, अतः तत् शाब्दज्ञानम् उपपाद्यम्। एवञ्चात्र उपपादकत्वात् बन्धमिथ्यात्वं फलं नाम प्रमा। उपपाद्यत्वात् च शाब्दी प्रतीतिः करणं नाम प्रमाणमिति भावः। एवमेव श्रुतार्थापत्तेः अपरम् उदाहरणं भवति - जीवी देवदत्तः गृहे न इति। अयम्भावः जीवन् जनः गृहे तिष्ठति बहिर्वा। तृतीया गतिः अत्र नास्ति। तत्र जीवी देवदत्तः गृहे नास्ति इति श्रवणे जीविनो गृहासत्त्वं बहिःसत्त्वं विनानुपपन्नम्। देवदत्तः बहिःसत्त्ववान् इति निश्चयो भवति। अतः नात्र काचन विप्रतिपत्तिः। ततश्च येन विना बहिःसत्त्वेन विना जीविनः गृहासत्त्वम् अनुपपन्नम् अतः तत् बहिःसत्त्वम् अत्र उपपादकम्। यस्य अभावे बहिःसत्त्वाभावे यस्य अनुपपत्तिः जीविनः गृहासत्त्वस्य अनुपपत्तिः। अतः तत् जीविनः गृहासत्त्वम् अत्र उपपाद्यम्। एवञ्च उपपाद्यज्ञानेन जीविनः गृहासत्त्वज्ञानेन उपपादकस्य बहिःसत्त्वस्य कल्पनं क्रियते। अतः अत्र जीविनः गृहासत्त्वज्ञानं करणम् नाम अर्थापत्तिप्रमाणम्। बहिःसत्त्वज्ञानम्, फलं नाम अर्थापत्तिप्रमा।

### श्रुतार्थापत्तिभेदः -

श्रुतार्थापत्तिरपि द्विविधा वर्तते। अभिधानानुपपत्तिः अभिहितानुपपत्तिश्चेति। कारणं हि शाब्दबोधानुपपत्तिस्थले श्रुतार्थापत्तिः भवतीति प्रतिपादितम्। तत्र शाब्दबोधानुपपत्तेरपि मूलं द्विविधं भवति - शब्दानुपपत्तिः अर्थानुपपत्तिश्च। अतः तद्भेदात् श्रुतार्थापत्तेरपि द्वैविध्यमावश्यकमिति।

### अभिधानानुपपत्तिः -

यत्र वाक्यैकदेशश्रवणेऽन्वयानुपपत्त्याऽन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तत्र अभिधानानुपपत्तिः इति। अभिधानानुपपत्तेः अपरं नाम तात्पर्यानुपपत्तिः इत्यपि अस्ति। यथा केनचित् जनेन 'द्वारम् पिधेहि' इति वाक्यस्य स्थाने द्वारम् इति वाक्यैकदेशस्य प्रयोगः कृतः। परन्तु वक्ता बोधयितुम् इच्छति यद् द्वारम् पिधेहि इति। अर्थात् वक्तुः द्वारकर्मकपिधाने तात्पर्यमस्ति। एतत् श्रोता प्रकरणादिना अवगच्छति। परन्तु वक्त्रा प्रयुक्ते वाक्ये पिधेहि इति पदं नास्ति। तेन द्वारकर्मकपिधानम् इत्यर्थः भवितुं नार्हति। अतः वक्तुः तात्पर्यम् अनुपपन्नम्। अतः तात्पर्योपपत्तये पिधेहि इति पदस्य अध्याहारः श्रोत्रा क्रियते। तेन च द्वारकर्मकपिधानम् इति अर्थः प्रकृतवाक्यस्य भवति। तेन च तात्पर्यानुपपत्तेः परिहारः भवति। अत्र द्वारकर्मपिधानम् इति तात्पर्यम् पिधेहि इति पिधानोपस्थापकपदं विनानुपन्नम् सत् अश्रुतं पिधेहि इति पदान्तरं कल्पयति। द्वारकर्मकपिधानम् इति तात्पर्यम् उपपाद्यम्। तस्य ज्ञानं च अर्थापत्तिप्रमाणम्। पिधेहि इति पदस्याध्याहारः उपापादकः। अतः पिधेहि इति पदस्य ज्ञानम् अर्थापत्तिप्रमा।

### अभिहितानुपपत्तिः -

यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र अभिहितानुपपत्तिः द्रष्टव्या। यथा स्वर्गकामः ज्योतिष्टोमेन यजेत इति श्रुतिवचनम्। अस्यार्थः - स्वर्गकामः पुरुषः ज्योतिष्टोमयागं



कुर्यात् इति। अतः अनेन अर्थेन ज्योतिष्टोमस्य स्वर्गसाधनत्वम् अवगम्यते। ज्योतिष्टोमयागस्य समाप्तेः बहुकालानन्तरं यजमानस्य स्वर्गलाभः भवति। अतः स्वर्गलाभं प्रति ज्योतिष्टोमयागः साक्षात् कारणं भवितुम् नार्हति। कथं तर्हि ज्योतिष्टोमः स्वर्गसाधनम्। अतः ज्योतिष्टोमः स्वर्गसाधनम् इति वाक्यार्थस्यानुपपत्तिः भवति। अतः अनुपपन्नः सन् अपूर्वरूपम् अर्थान्तरं कल्पयति। तेन च स्वर्गप्राप्तिः भवतीति फलितम्। अर्थात् ज्योतिष्टोमः अपूर्वं जनयति। तच्च अपूर्वम् अन्तःकरणे विद्यमानः पुण्याख्यः गुणविशेषः। तच्च पुण्यं स्वर्गलाभं यावत् तिष्ठति।

प्रकृते च ज्योतिष्टोमः स्वर्गसाधनम् इति वाक्यार्थः उपपाद्यः अस्ति। अपूर्वम् उपपादकम् अस्ति। अतः ज्योतिष्टोमः स्वर्गसाधनम् इति वाक्यार्थज्ञानं करणम्। अतः अर्थापत्तिप्रमाणम्। अपूर्वज्ञानं च फलम्। अतः अर्थापत्तिप्रमा।

**अत्रायं विशेषः-**

अथ नैयायिकमते चत्वारि प्रमाणानि सन्ति। प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः चेति। तैः अर्थापत्तिप्रमाणं नैव स्वीक्रियते। ते वदन्ति यद् अर्थापत्तिप्रमाणस्य अनुमाने एव अन्तर्भावः भवति। तेषां मते अर्थापत्तिप्रमाणस्य केवलान्वयिनि अन्तर्भावः भवति। किन्तु वेदान्तसिद्धान्ते केवलान्वयिपदार्थः एव न स्वीक्रियते। अतस्तत्र अन्तर्भावः नैव भवितुमर्हति इति भावः।



## पाठगतप्रश्नाः - १

१. अर्थापत्तिपदस्य द्वौ अर्थौ कौ।

२. अर्थापत्तिप्रमायाः लक्षणं किम्।

३. अर्थापत्तिप्रमाणस्य लक्षणं किम्।

४. पीनोऽयं देवदत्तः दिवा न भुङ्क्ते इत्युदाहरणे उपपादकं किम् उपपाद्यं च किम्।

५. उपपाद्यस्य लक्षणं लिखत।

६. उपपादकस्य लक्षणं लिखत।

७. अर्थापत्तेः कति भेदाः भवन्ति।

८. श्रुतार्थापत्तेः कति के च भेदाः भवन्ति।

९. श्रुतार्थापत्तेरुदाहरणं किम्।

## १०.३) अनुपलब्धिः

षट्सु प्रमाणेषु अन्यतमं प्रमाणम् अनुपलब्धिप्रमाणम्। अनुपलब्धिशब्दे नञ्तत्पुरुषसमासः अस्ति। तस्य च विग्रहः भवति - न उपलब्धिः इति अनुपलब्धिः। तेन च अस्यार्थः भवति



उपलब्ध्यभावः। उपलब्ध्यभावप्रमाणेन च अभावविषयकज्ञानं जायते। तस्य च लक्षणम् अस्ति - **ज्ञानकरणाजन्याभावानुभवासाधारणकारणम्** अनुपलब्धिरूपं प्रमाणम्। ज्ञानरूपं यत् करणं तदजन्यो योऽभावानुभवः तस्यासाधारणं कारणम् इति विग्रहः। अर्थात् ज्ञानरूपकरणेन यन्न जायते तद् ज्ञानकरणाजन्यम्। ज्ञानकरणाजन्यम् यत् अभावविषयकज्ञानं तस्य यद् असाधारणं कारणम् हि अनुपलब्धिप्रमाणम्। अस्यार्थः - ज्ञानरूपं यत् करणं तदजन्यो योऽभावानुभवः नाम अभावज्ञानं, तस्य यद् असाधारणं कारणं तदनुपलब्धिरूपं प्रमाणं बोध्यम्। एवञ्च ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वम् इति अनुपलब्धिप्रमाणस्य लक्षणं फलति। अत्रायं भावः - तत्र अनुमितिप्रमायाः करणं भवति व्याप्तिज्ञानम्, उपमितिप्रमायाः करणं भवति सादृश्यज्ञानम्, शाब्दप्रमायाः करणं भवति पदज्ञानम् इति। तत्र एतैः ज्ञानरूपकरणैः अजन्यः यः अभावविषयकानुभवः, तस्य असाधारणकारणम् एव अनुपलब्धिप्रमाणमिति भावः। यथा भूतले घटाभावः विद्यते, तस्य ज्ञानं घटस्य अनुपलब्ध्या एव भवति। एवञ्च घटस्य अनुपलब्ध्या घटाभावस्य ज्ञानं भवति। एवमेव पटाभावस्य ज्ञानं पटस्य अनुपलब्ध्या भवति। एवमेव अन्यत्रापि। तस्मात् घटादिवस्तुज्ञानाभावेन घटादिवस्त्वभावः ज्ञायते। एवञ्च तत्तद्वस्तुज्ञानाभावः करणम्, तत्तद्वस्त्वभावज्ञानं फलमिति सिध्यति। एवञ्च घटादिवस्तुज्ञानाभावः करणं भवति। अर्थात् अनुपलब्धिप्रमाणं भवति। घटादिवस्त्वभावज्ञानं फलं भवति। अर्थात् प्रमा भवति।

### अत्रायं विशेषः -

अथ यदि अभावविषयकज्ञानं प्रति अनुपलब्धिः करणमिति स्वीक्रियते तर्हि यथा जाग्रदवस्थायां घटाभावादेः ज्ञानम् अनुपलब्धिद्वारा भवति तथैव शयनकाले अपि घटाभावादेः ज्ञानम् स्यात्, तदानीमपि घटादीनाम् अनुपलब्धिसत्त्वात्, परन्तु शयनकाले तु अभावविषयकज्ञानं न भवति। अपि च धर्माभावविषयकज्ञानम्, अधर्माभावविषयकज्ञानम् अपि अनुपलब्धिद्वारा स्यात्, किन्तु वेदान्तिभिः धर्माभावविषयकज्ञानम् अधर्माभावविषयकज्ञानं तु अनुमानप्रमाणेन भवति इति प्रतिपाद्यते न तु अनुपलब्धिद्वारा। अतः प्रश्नः भवति यत् यदि अनुपलब्धिप्रमाणम् अस्ति तर्हि शयनकाले ज्ञानं कुतः न भवति। अपि च धर्माभावविषयकज्ञानम् अधर्माभावविषयकज्ञानं च अनुपलब्धिद्वारा कुतः न भवति इति। अत्र वदन्ति वेदान्तिनः यत् न हि अनुपलब्धिमात्रेण अभावज्ञानं जायते। अपितु योग्यानुपलब्धिद्वारा अभावविषयकज्ञानम् उत्पद्यते। अतः योग्यानुपलब्धिः विद्यते चेत् अभावविषयकज्ञानं भवति, योग्यानुपलब्धिः नास्ति चेत् अभावविषयकज्ञानं न भवति। एवञ्च अभावविषयकज्ञानं प्रति योग्यानुपलब्धिः कारणम् इति सिद्धम्।

ननु का नाम योग्यानुपलब्धिः इति चेद् अत्रोच्यते - **तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकत्वं अनुपलब्धेः योग्यत्वम्**। तर्कितेन (आपादितेन) प्रतियोगिसत्त्वेन प्रसञ्जितो प्रतियोगी यस्य अनुपलम्भस्य सः तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकः, तस्य भावः तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकत्वम्। अर्थात् यस्य अभावः गृह्यते तस्य यः प्रतियोगी, तस्य सत्त्वेन अधिकरणे तर्कितेन प्रसञ्जितम् अपादनयोग्यं प्रतियोगि उपलब्धिस्वरूपं यस्य अनुपलम्भस्य सः तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकः। तस्य भावः तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकत्वम्।



अयम्भावः - प्रकाशयुक्तभूतले घटः यदि नास्ति तर्हि तत्र घटाभावः विद्यते। एवञ्च तत्र विद्यमानस्य घटाभावस्य ज्ञानम् घटस्य अनुपलब्धिद्वारा भवति। कारणं हि अत्र या अनुपलब्धिः सा योग्यानुपलब्धिः। यतो हि प्रकृते घटस्य अभावः गृह्यते। अतः तस्य प्रतियोगी घटः। तस्य सत्त्वेन अधिकरणे प्रसञ्जितम् अपादानयोग्यं प्रतियोगि उपलब्धिस्वरूपं विद्यते। कारणं प्रकृते वक्तुं शक्यते यदि अत्र घटः स्यात् तर्हि उपलभ्येत। अत्र या अनुपलब्धिः सा योग्यानुपलब्धिः। तया च घटाभावविषयकं ज्ञानं भवति। अयम्भावः - यस्मिन् अधिकरणे इदं वक्तुं शक्यते यदि अत्र घटः स्यात् तर्हि तस्य उपलब्धिः स्यात्। परन्तु नास्ति। अतः तस्य अनुपलब्धिः विद्यते इति तस्मिन् अधिकरणे या अनुपलब्धिः सा योग्यानुपलब्धिः। यथा प्रकाशयुक्तभूतले घटाभावदशायाम् इदं वक्तुं शक्यते यत् यदि अत्र घटः स्यात् तर्हि तस्य उपलब्धिः स्यात्। नास्ति। अतः तस्य अनुपलब्धिः विद्यते। तस्मात् प्रकाशयुक्तभूतले घटस्य या अनुपलब्धिः सा योग्यानुपलब्धिः। अतः तया घटाभावस्य ज्ञानं भवति। अन्धकारयुक्तभूतले तु घटाभावसत्त्वदशायामपि इदं नैव वक्तुं शक्यते यत् यदि अत्र घटः स्यात् तर्हि तस्य उपलब्धिः स्यात्। अतः अन्धकारयुक्तभूतले घटस्य या अनुपलब्धिः सा योग्यानुपलब्धिः नास्ति। तस्मात् तया घटाभावस्य ज्ञानं नैव भवति। एवमेव शयनकाले घटाभावसत्त्वदशायामपि इदं नैव वक्तुं शक्यते यत् यदि अत्र घटः स्यात् तर्हि तस्य उपलब्धिः स्यात्। अतः शयनकाले घटस्य या अनुपलब्धिः सा योग्यानुपलब्धिः नास्ति। तस्मात् तया घटाभावस्य ज्ञानं नैव भवति। एवमेव धर्मस्य अधर्मस्य च असत्त्वदशायाम् इदं वक्तुं नैव शक्यते यत् अत्र धर्मः स्यात्, अधर्मः वा स्यात् तर्हि तस्य उपलब्धिः स्यात्, नास्ति। अतः तस्य अनुपलब्धिः विद्यते इति। तस्मात् धर्मस्य अधर्मस्य च या अनुपलब्धिः सा योग्यानुपलब्धिः नास्ति, अपितु अयोग्यानुपलब्धिः विद्यते।

## १०.३.१) अभावभेदः -

अनुपलब्धिप्रमाणेन अभावविषयकं ज्ञानं जायते इति प्रतिपादितम्। तादृशाभावषियकज्ञानस्य विषयः अभावः च वेदान्तमते चतुर्विधः अस्ति। तथाहि प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावः च।

### प्रागभावः -

भविष्यतीति प्रतीतिविषयः अभावः प्रागभावः। यथा इह मृत्पिण्डे घटः भविष्यति इति मृत्पिण्डादौ कारणे विद्यमानस्य कार्यस्य अभावः एव प्रागभावः इत्युच्यते। एवमेव तन्तौ पटः भविष्यति इति प्रतीतिविषयः अभावः तन्तौ पटस्य प्रागभावः। एवञ्च कार्यस्य उत्पत्तेः पूर्वं कारणे विद्यमानः कार्यस्य यः अभावः स एव प्रागभावः इत्युच्यते। अयञ्च अभावः अनादिः सान्तः अस्ति।

### प्रध्वंसाभावः -

प्रध्वंसाभावस्य अपरं नाम ध्वंसाभावः इत्यस्ति। जन्यविनाश्यभावत्वम् इति च ध्वंसाभावस्य लक्षणम्। अर्थात् जन्यः विनाशी च यः अभावः सः एव ध्वंसाभावः इत्युच्यते। यथा मृत्पिण्डादौ मुद्गरपातानन्तरं घटस्य नाशे सति घटस्य प्रध्वंसाभावः उत्पद्यते, अपि च कपालस्य नाशे च अस्य



अभावस्यापि नाशः भवति। तस्मात् अयं भावः जन्यः अपि अस्ति विनाशी चापि अस्ति। तस्मात् अयं यः अभावः स प्रध्वंसाभावः इति। अयञ्च अभावः घटः नष्टः इति प्रतीतिविषयः।

**अत्यन्ताभावः -**

चतुर्विधेषु अभावेषु अन्यतमः अभावः अत्यन्ताभावः। यद्वस्तु यत्र न कदापि भविष्यति, न च कदाचित् भूतम्, न च अस्ति, तस्य वस्तुनः तत्र अत्यन्ताभावः बोध्यः। अर्थात् यत्राधिकरणे यस्य कालत्रयेऽप्यभावः सः अत्यन्ताभावः। यथा वायौ रूपं नास्ति इति प्रतीतिसाक्षिकः अभावः वायौ रूपात्यन्ताभावः। भूतले घटः नास्ति इति प्रतीतिसाक्षिकः भूतले घटाभावः। एवमन्यत्रापि बोध्यम्। एवञ्च त्रैकालिकाभावत्वम् इति अत्यन्ताभावस्य लक्षणं वक्तुं शक्यते।

**अन्योन्याभावः -**

अन्यस्य अन्यस्मिन् यः अभावः सः अन्योन्याभावः। अर्थात् इदमिदं नेति प्रतीतिविषयः यः अभावः सः अन्योन्याभावः। घटः न पटः इति प्रतीतिसिद्धः यः घटस्य अभावः, सः घटस्य अन्योन्याभावः। अयम् अन्योन्याभावः सादिः अपि अस्ति, अनादिः अपि अस्ति। एवञ्च यत्र अन्योन्याभावस्य अधिकरणं सादिः भवति तत्र अन्योन्याभावः अपि सादिः भवति। यथा घटः न पटः इत्यत्र पटरूपाधिकरणम् सादि अस्ति। अतः अत्र यः अन्योन्याभावः सः सादिः अस्ति। यत्र अन्योन्याभावस्य अधिकरणम् अनादि भवति तत्र अन्योन्याभावः अपि अनादिः भवति। यथा ब्रह्म न जीवः इत्यत्र अन्योन्याभावस्य जीवरूपाधिकरणम् अनादि अस्ति, अतः अत्र यः अभावः सः अनादिः अस्ति। अयम् अभावः भेदः विभागः पृथक्त्वं च इत्यपि प्रोच्यते। एवञ्च यथा इदम् इदं नेति प्रतीतिविषयः यः अभावः सः अन्योन्याभावः, तथैव इदम् अस्मात् विभक्तम्, इदम् अस्मात् अन्यत्, इदम् अस्मात् पृथग् इत्यादिप्रतीतिविषयः अभावः अपि अन्योन्याभावः इत्युच्यते।

**अन्योन्याभावभेदः -**

अन्योन्याभावः द्विविधः भवति। सोपाधिकः निरूपाधिकश्चेति।

**सोपाधिकः -**

तत्र उपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम्। उपाधिसत्ताव्याप्या सत्ता यस्य भेदस्य सः भेदः उपाधिसत्ताव्याप्यसत्ताकः, तस्य भावः उपाधिसत्ताव्याप्यसत्ताकत्वम् इति। यथा घटाकाशः न मठाकाशः इति भेदः सोपाधिकः। उपाधिसत्ताव्याप्यसत्ताकत्वात्। यत्र यत्र आकाशादिभेदसत्ता तत्र तत्र घटाद्युपाधिसत्ता इति भेदसत्ता घटाद्युपाधिसत्ताव्याप्या, घटाद्युपाधिसत्ता तु व्यापिका। तथाहि यद्यपि आकाशः एकः एव विद्यते। किन्तु घटाद्युपाधिभेदात् आकाशः अपि भिद्यते। अतः अत्रेदं वक्तुं शक्यते यद् उपाधिभेदात् यत्र भेदः भवति तत्र यः अन्योन्याभावः सः सोपाधिकः इति। एवमेव एकस्यैव ब्रह्मणः अन्तःकरणभेदात् यः भेदः स अपि सोपाधिकः। यतोहि नहि ब्रह्मणि भेदः विद्यते किन्तु तदुपाधेः अन्तःकरणस्य भेदेन ब्रह्मणि भेदः प्रतीयते। अतः यावदन्तःकरणं तावदेवास्य भेदस्य स्थितिः।



**निरुपाधिकः -**

उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाववत्त्वं निरुपाधिकत्वम्। उपाधिसत्ताव्याप्या सत्ता यस्य भेदस्य सः भेदः उपाधिसत्ताव्याप्यसत्ताकः। तस्य भावः उपाधिसत्ताव्याप्यसत्ताकत्वम्। तस्य अत्यन्ताभावः इति उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभावः, तद्वत्त्वम् उपाधिसत्ताव्याप्यसत्ता-कत्वात्यन्ताभाववत्त्वम्। अर्थात् उपाधिसत्ताव्याप्यसत्ताकत्वस्य भेदस्य अभावः विद्यते तत्र यः भेदः सः निरुपाधिकः भेदः। यथा घटो न पटः इति भेदः निरुपाधिकः। यतोहि अत्र काचिदपि उपाधिः नास्ति। अतः अत्र भेदे उपाधिसत्ताव्याप्यसत्ताकत्वं नास्ति, किन्तु उपाधि-सत्ताव्याप्य-सत्ताकत्वात्यन्ताभाववत्त्वं विद्यते। अतः घटपटयोः यः भेदः सः निरुपाधिकः भेदः। अर्थात् यत्र स्वाभाविकः एव भेदः भवति तत्र निरुपाधिकभेदः इत्युच्यते। एवमेव घटः न मठः इत्यादिभेदः अपि निरुपाधिकः अस्ति। एवमन्यत्रापि बोध्यम्।

## १०.४) प्रामाण्यवादः

प्रमाणविषयपाठेषु प्रमाणं प्रमा चेति मुख्यविषयः। तत्र प्रमायां विद्यमानं प्रमात्वं कथं ज्ञायते इति अपि जिज्ञासा सुतरामुदेति। अत एव प्रामाण्यवादोऽपि प्रमाणविषयान्तर्गतः एव।

तत्र प्रामाण्यम् अप्रामाण्यं च स्वतः गृह्यते परतः वा गृह्यते इति विषये शास्त्रज्ञेषु मतभेदाः सन्ति। अत्र केवलं परिचयार्थम् अयं विषयः प्रस्तूयते। तत्र विषये एकं पद्यं प्रसिद्धमस्ति। यत्र सारांशरूपेण विषयस्य अस्य विवेचनं विद्यते। तथाहि पद्यम् -

प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः।

नैयायिकास्ते परतः सौगताश्चरमं स्वतः॥

प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।

प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्॥

तत्र सांख्यनये प्रामाण्यम् अप्रामाण्यं च स्वतः एव गृह्यते। नैयायिकमते प्रामाण्यम् अप्रामाण्यं च परतः एव गृह्यते। बौद्धमते प्रामाण्यं परतः गृह्यते। अप्रामाण्यं च स्वतः गृह्यते। मीमांसामते वेदान्तमते च प्रामाण्यं स्वतः गृह्यते। अप्रामाण्यं च परतः गृह्यते।

यथा 'अयं घटः' इति घटविषया प्रमा जायते। तथा 'इयं प्रमा' इति प्रमाविषया प्रमा जायते। यथा घटज्ञानस्य काचित् सामग्री (माध्यमम्) वर्तते तद्वत् प्रमाज्ञानस्यापि काचित् सामग्री वर्तते। प्रमायां प्रमात्वं विद्यते। इदं प्रमात्वमेव प्रामाण्यमिति कथ्यते। यथा प्रमायाः ज्ञानं जायते तथा प्रमात्वस्य अपि ज्ञानं भवति। यथा प्रमाविषयकज्ञानस्य काचित् सामग्री अस्ति एव, तद्वत् प्रमात्वविषयकज्ञानस्य अपि काचित् सामग्री अस्ति एव। येषां मते प्रमाविषयकज्ञानस्य या सामग्री सा एव प्रमात्वविषयकज्ञानस्यापि सामग्री अस्ति ते स्वतस्त्ववादिनः। येषां च मते प्रमाविषयज्ञानस्य या सामग्री ततः भिन्ना एव प्रमात्वविषयकज्ञानस्यापि सामग्री अस्ति। ते परतस्त्ववादिनः। अर्थात् ज्ञानद्वयं भवति। एकस्य ज्ञानस्य विषयः प्रमा, अपरज्ञानस्य विषयः प्रमात्वम्। ज्ञानद्वयस्यापि काचित् सामग्री भवति। यदि द्वयोः ज्ञानयोः

सामग्री समाना तर्हि स्वतस्त्वम्। यदि सामग्री भिन्ना तर्हि परतस्त्वम्। या प्रमा अत्र गृह्यते तन्निष्ठमेव प्रमात्वमपि।



## पाठगतप्रश्नाः

१. अनुपलब्धिप्रमाणस्य लक्षणं लिखत।

२. अनुपलब्धेः योग्यत्वस्य किं लक्षणम्।

३. अभावस्य कति भेदाः भवन्ति।

४. प्रागभावस्य लक्षणं लिखत।

५. प्रागभावः कुत्र विद्यते।

६. प्रध्वंसाभावस्य लक्षणं लिखत।

७. प्रध्वंसाभावः कुत्र विद्यते।

८. अत्यन्ताभावस्य लक्षणं लिखत।

९. कः त्रैकालिकाभावः।

१०. अन्योन्याभावस्य स्वरूपं लिखत।

११. अन्योन्याभावभेदाः के।

१२. सोपाधिकान्योन्याभावस्य लक्षणं किम्।

१३. निरुपाधिकान्योन्याभावस्य लक्षणं किम्।

१४. प्रामाण्यपदस्य प्रमाणत्वम् प्रमात्वं वार्थः।

१५. वेदान्तिनः स्वतस्त्वपादिनः परतस्त्ववादिनो वा।



## पाठसारः

अस्मिन् पाठे अर्थापत्तिप्रमाणस्य अनुपलब्धिप्रमाणस्य च निरूपणं विद्यते। तत्र अर्थापत्तिशब्दः व्युत्पत्तिभेदेन प्रमावाचकः प्रमाणवाचकश्च वर्तते इति प्रतिपादितम्। उपपाद्यज्ञानम् अर्थापत्तिप्रमाणं भवति। उपपादकज्ञानं च अर्थापत्तिप्रमा भवति। तत्र तदभावव्यापकीभूताभावप्रतियोगित्वम् उपपाद्यत्वम्। एवम् उपपाद्याभावव्याप्यभूताभावप्रतियोगित्वम् उपपादकत्वम्। अर्थापत्तेः द्वौ भेदौ स्तः - श्रुतार्थापत्तिः दृष्टार्थापत्तिश्च। अभिधानानुपपत्तिः अभिहितानुपपत्तिश्च इति द्वौ भेदौ श्रुतार्थापत्तेः स्तः।

तदनन्तरम् अनुपलब्धिप्रमाणस्य विवेचनं विद्यते। तत्र ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वम् इति अनुपलब्धिप्रमाणस्य लक्षणं विद्यते।



अनुपलब्धिप्रमाणेन च अभावविषयकज्ञानं जायते। अत्र तत्तद्वस्तुज्ञानाभावः करणम्, तत्तद्वस्त्वभावज्ञानं फलमिति सिध्यति। एवञ्च घटादिवस्तुज्ञानाभावः करणं भवति। अर्थात् अनुपलब्धिप्रमाणं भवति। घटादिवस्त्वभावज्ञानं फलं भवति। अर्थात् प्रमा भवति। किन्तु नहि अनुपलब्धिमात्रेण अभावग्रहः भवति किन्तु योग्यानुपलब्धिद्वारैव। धर्माधर्माभावविषयकज्ञानं तु अनुमानप्रमाणेन भवति। तयोः योग्यानुलब्ध्यभावात्। अनुपलब्धिद्वारा यस्य अभावस्य ज्ञानं भवति तच्चतुर्विधं भवति। प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावभेदात्। तत्र भविष्यतीति प्रतीतिविषयः यः अभावः सः प्रागभावः। नष्टः इति प्रतीतिविषयः अभावः प्रध्वंसाभावः। नास्तीति प्रतीतिविषयः अभावः अत्यन्ताभावः। इदम् इदं नेति प्रतीतिविषयः अभावः अन्योन्याभावः। पाठान्ते च प्रामाण्यवादविषये सामान्यविवरणं विद्यते।



## पाठान्तप्रश्नाः -

१. अर्थापत्तिप्रमाणस्य लक्षणं प्रतिपादयन्तु।

२. दृष्टार्थापत्तिलक्षणं लिखन्तु।

३. श्रुतार्थापत्तिस्वरूपं प्रतिपादयत।

४. अभिधानानुपपत्तिलक्षणं लिखत।

५. अभिहितानुपपत्तिस्वरूपं प्रतिपादयत।

६. अनुपलब्धिप्रमाणस्य स्वरूपं लिखत।

७. अभावभेदान् वर्णयत।

८. योग्यानुपलब्धिः का इति प्रतिपादयत।

९. प्रागभावप्रध्वंसाभावयोः स्वरूपं प्रकाशयत।

१०. अत्यन्ताभावान्योन्याभावयोः स्वरूपं प्रकाशयत।

११. प्रामाण्यं प्रतिपादयत।



## पाठगतप्रश्नोत्तराणि -

१. अर्थापत्तिप्रमा, अर्थापत्तिप्रमाणमिति द्वौ अर्थौ अर्थापत्तिपदस्य।

२. उपपाद्यज्ञानेनोपपादककल्पनम् अर्थापत्तिप्रमा।

३. अर्थापत्तिप्रमाकरणम् अर्थापत्तिप्रमाणम्।

४. पीनोऽयं देवदत्तः दिवा न भुङ्क्ते इत्युदाहरणे रात्रिभोजनम् उपपादकम्। उपपाद्यं च दिवाऽभुञ्जाननिष्ठपीनत्वम्।



५. येन विना यदनुपपन्नम्, तत् तत्रोपपाद्यम्।

६. यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्।

७. अर्थापत्तेः द्वौ भेदौ स्तः। दृष्टार्थापत्तिः श्रुतार्थापत्तिः च।

८. श्रुतार्थापत्तेः द्वौ भेदौ स्तः। अभिधानानुपपत्तिः अभिहितानुपपत्तिश्चेति।

९. तरति शोकमात्मवित् इति श्रुतिः।

१०. ज्ञानकरणाजन्याभावानुभवासाधरणकारणम् अनुपलब्धिरूपं प्रमाणम्।

११. तर्कित-प्रतियोगिसत्त्व-प्रसञ्जित-प्रतियोगिकत्वं अनुपलब्धेः योग्यत्वम्।

१२. अभावस्य चत्वारः भेदाः सन्ति। प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावः च।

१३. अनादित्वे सति अभावत्वम् प्रागभावस्य लक्षणम्।

१४. प्रागभावः उपादानकारणे विद्यते।

१५. जन्यविनाश्यभावत्वं प्रध्वंसाभावस्य लक्षणं भवति।

१६. प्रध्वंसाभावः कार्यध्वंसोत्तरम् नष्टकार्यस्य अवयवेषु वर्तते।

१७. त्रैकालिकाभावत्वम् अत्यन्ताभावस्य लक्षणम् अस्ति।

१८. अत्यन्ताभावः।

१९. अन्योन्याभावस्य स्वरूपं लिखत।

२०. अन्योन्याभावः द्विविधः भवति। सोपाधिकः निरूपाधिकश्चेति।

२१. उपाधिसत्ताव्याप्यसत्ताकत्वं सोपाधिकत्वम्।

२२. उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाववत्त्वं निरुपाधिकत्वम्।

२३. प्रामाण्यपदस्य प्रमात्वमर्थः।

२४. वेदान्तिनः स्वतस्त्वपादिनः।

॥ इति दशमः पाठः ॥

